किंशुके[1] काञ्चनारे च धत्तूरे कनकः स्मृतः।
करको दाडिमे प्रोक्तः करकं च कमण्डलौ॥
करे पक्षिविशेषे ना करका स्या[2]द्घनोपले।
क्रमुकः स्याद्भद्रमुस्ते क्रमुकः पूगलोध्रयोः॥
फले कार्पा[3]सिकायां च पट्टिकाब्रह्मदारुणोः।
कटकं लवणे राजधानीगिरिनितम्बयोः॥
कटकं वलये दन्तमण्डने दन्तिनामपि।
कटुका कटुरोहिण्यां व्योषे तु स्यान्नपुंसकम्॥
रसान्तरे तु कटुकः क[4]ठने (पटोले?) कटुकः स्मृतः।
कण्टको न स्त्रियां क्षुद्रशत्रौ[5] मत्स्यादिकीकसे॥
नैयायिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः।
करङ्कः शीर्षास्थि सस्ये च नारिकेलफलास्थिनि॥
कलङ्कस्त्वपवादे स्यात् कालायसमलेऽपि च।
कर्णिका करिहस्ताग्रे बीजकोशेऽम्बुजस्य च॥
क्रमुकादिच्छटांशे च करमध्याङ्गुलावपि।
कर्णिका कर्णभूषायां कुट्टिन्यामपि कुत्रचित्॥
क[6]चाकुस्तु दुराधर्षे तथाध्वनि विपर्यये।
बिलेशये च दुःशीले कञ्चुको वारबाणके॥
वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके।
निर्मोके फणिनां चापि कञ्चुकी त्वौषधान्तरे॥

---

१ ख. रे। २ क. द। ३ ख. या।
४ ख. टि। ५ क. षे। ६ ख. वा।

रसेन्द्रे कञ्चुकी प्रोक्तः [1]व्याले वर्षधरेऽपि च।
कणिका कथ्यतेऽत्यन्तसूक्ष्मवस्त्व[2]ग्निमन्थयोः॥

कन्दुकः क्रीडनीये स्यात् कण्ठिका कण्ठसूचके।
कवको ग्रासमात्रे स्याद्भूस्फोटे कतकं विदुः॥

क्रयकस्त्वदितो वैश्ये कर्तको नापिते मतः।
कम्पाङ्कः पवने प्रोक्तः कलिका कोरके मता॥

कारिका यातनायां स्यान्नवयोषिति च स्मृता।
स्मृतौ विवरणश्लोके कारिका नटयोषिति॥

नपुंसकं तु कर्मादौ कारकं कर्तरि त्रिषु।
कालिका योगिनीभेदे धूमरीनवमेघयोः॥

काषायं गौर्यां मेघपङ्क्तौ क्रमदेये च वस्तुनि।
पटोलशाखारोमालीमांसीकाकीशिवासु च॥

तथा वृश्चिकपत्रेऽपि वैवर्ण्येऽपि निगद्यते।
पिङ्गौ तु कालकः प्रोक्तो रोगभेदे तु काचकः॥

कार्मिकः शिल्पिनि प्रोक्तः तथैव च कृषीवले।
काशिका तु पुरीभेदे चषकेऽपि निगद्यते॥

कालकं त्वन्धकारे स्यात् कालकं यकृति स्मृतम्।
कामुकी तु वृषस्यन्त्यामिच्छावत्यां तु कामुका॥

कार्मुकं धनुषि स्यान्ना वेणौ कर्मक्षमेऽन्यवत्।
कामुकः कमनेऽशोकपादपे चातिमुक्तके॥

---

१ क. फणावपि निगद्यते। २ क. स्लेऽ।

काठकः कठशाखीये [1]कालकस्तिलकालके ।
कार्तिकः स्यादूर्जमासि तत्पूर्णायां तु कार्तिकी ॥
काञ्चिकं काञ्जिकं तुल्ये द्वे तुषोदकवाचके ।
क्लितकं मधुयष्टौ स्यात् कीलकं द्वारबन्धने ॥
कीचकः छिद्रवद्वेणौ दैत्यभेदे द्रुमान्तरे ।
क्रिमिजातौ कीटकः स्यान्निष्ठुरे वाच्यलिङ्गकः ॥
किम्पाकस्तु फलाङ्गेऽपि महाकाले, च कुड्मले ।
किंशुकः स्यात्पलाशद्रौ किञ्जल्कः केसरोऽस्त्रियाम् ॥
कुत्साकुः कुशवज्र्यर्कपरोत्तापनकर्तृषु ।
कुलिकः कुलसंपन्ने द्रुभेदे पन्नगान्तरे ॥
कुहकं स्यादिन्द्रजाले कुहकः कपटान्विते ।
कुशिकः स्याद्राजभेदे कुतुकं तु कुतूहले ॥
कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे ।
[2]उदपाने चितायां च कूपकश्च विदारके ॥
कूपकोऽन्धावपि प्रोक्तः कूपिकाऽम्भोगतोपले ।
कुलकं तु पटोले स्याच्छ्लोकसम्बद्धगुच्छके ॥
कुलिकोऽह्नौ कुलश्रेष्ठे वल्मिके काकतिन्दुके ।
कूर्चिका तूलिकायां स्यात् सूचिकायां च कुड्मले ॥
कपाटोद्घाटने क्षीरविकृतावपि योषिति ।
कुम्भिका वृक्षभेदे स्यात् कुण्डिका तु कमण्डलौ ॥

---

१ ख. गदितः शब्दवेदिभिः ।

२ ख. पुस्तकेऽयं पाठोऽधिकः ।

कूलिका चित्रलेखन्यां कूञ्चिकायां तु कूचिका।
कूलकं तु मतं तूर्ये(स्तूपे?) कुलकस्तु द्रुमान्तरे॥
काले तु कृषकः प्रोक्तः कृत्तिका तारकान्तरे।
आसुर्यां कालिकायां च कृष्णिकेत्यभिधीयते॥
केशिकः केशसम्पन्ने केतकस्तु द्रुमान्तरे।
केणिका पटकुट्यां स्यात्क्रीडायां केलिका मता॥
कैशिकी वृत्तिभेदे स्यात्कैतकं केतकीरजः।
कैशिकं केशसंबद्धे कौलिकः शबरे मतः॥
कोरकः कुड्मले च स्यात्कक्कोलकमृणालयोः।
कोणको गृहभागे स्याद्वीणाङ्गे[1] कोणिका मता॥
मरीचे कोलकं प्रोक्तं कोलकं बदरीफले।
कौशिको गुग्गुलौ व्यालग्राहे नकुलशक्रयोः॥
विश्वामित्रे च कोशज्ञोलूकयोरपि कौशिकः।
कौशिकी चण्डिकायां स्यान्नदीभेदे च कीर्तिता॥
कौण्डिकः कुण्डकर्मज्ञे कौन्तिकः कुन्तयोधिनि।
कुतूहले कौतुकं स्यादभिलाषे महोत्सवे॥
तथा परम्परायाते मङ्गले हर्षनर्मणोः।
विवाहसूत्रगीतादिभोगयोरपि कौतुकम्॥
खङ्गिको महिषीक्षीरे फेनसैनिकयो र्मतः।
खटिका लेखनद्रव्ये कर्णरन्ध्रे च वीरणे॥

खटकः स्यादर्धमुष्टौ दोर्मूले खण्डिकं मतम् ।
खनकश्चित्ततत्त्वज्ञे सन्धिचौरे च मूषके ॥
मन्थाने खजकः प्रोक्तः खण्डिकश्चणके मतः ।
खजाका तु भवेद्दर्व्यां खुल्लकः स्वल्पनीचयोः ॥
खेटकं तु लघुग्रामे युद्धसाधनचर्मणि ।
खोलकः पाकवल्मीकपूगकोशे शिरस्त्रके ॥
ग्रन्थिकं पिप्पलीमूले दैवज्ञे गुग्गलौ तु ना ।
ग्रन्थिपर्णं करीरे च सहदेवाख्यपाण्डवे ॥
गडुकः पात्रभेदे स्याद्गण्डूकः कन्दुके मतः ।
[1]क्रूरकर्मणि गण्डूकः कथितः शब्दवेदिभिः ॥
गण्डकी तु नदीभेदे गण्डकः शकुलार्भके ।
गण्डकः खड्गिनि ख्यातः सङ्ख्याविद्याप्रभेदयोः ॥
अवच्छेदेऽन्तरायेऽपि गण्डकः समुदाहृतः ।
गणकाख्या तु दैवज्ञे सङ्ख्याविदि निगद्यते ॥
गणिका यूथिकावेश्यातर्कारीतरुणीष्वपि ।
गल्वर्कोऽर्काश्मचषके [2]गर्त्तकं भूमिनिम्नके ॥
गर्त्तिका तन्तुशालायां गर्भकं रजनीयुगे ।
गन्धकः स्याद्धातुभेदे गन्त्रिकं शकटे मतम् ॥
केशमध्यगते माल्ये गर्तकः परिकीर्तितः ।
[3]ग्रान्थिकः पण्डितजने गान्धिकः स्याच्च लेखके ॥

---

१ ख. पु० अयं पाठोऽधिकः ।
२ क० पुस्तके गण्डूकः क्रूरकर्मणि, इति पाठभेदः ।     ३ ख. ग्र ।

गान्धिकश्चापि गदितः सुगन्धद्रव्यहारिणि ।
ग्राहको घातिविहगे व्याधानां च ग्रहीतरि ॥

गिरिका बालमूषायां कथ्यते शब्दवेदिभिः ।
गुणकः स्याज्ज्योतिषिके गुच्छकः स्तबके मतः ॥

गुह्यको देवभेदेऽपि गुह्यकः स्यात्तु गो[1]पिते ।
गृह्यको निघ्नके प्रोक्तस्तथा स्वच्छन्दचारिणि ॥

गुण्डको मलिने धूलौ कलोक्तिस्नेहपात्रयोः ।
[2]गेन्दुकं कन्दुके प्राहुर्गैरिकं धातुरुक्मयोः ॥

गोलको विधवापुत्रे जाराच्च मणिके गुडे ।
गोरङ्कुः पक्षिजातौ स्यात्तथा नग्नकबन्दिनोः ॥

गोणिका वृषवाह्ये स्याद्गौणिकस्तत्सहे वृषे ।
घटिका स्यात्कालमाने तथा क्षुद्रघटेऽपि च ॥

कृकाटिकायां च तथा घण्टिका कांस्यवादने ।
घाण्टिकः[3] स्याद्बोधकरे घातिकः पिष्टपूरके ॥

घातुको मारके ख्यातो घुण्टकः पाद[4]गेऽस्थिनि ।
घोलकस्तु समूहे स्याद्घो[5]लिका शाकभिद्यपि ॥

धामार्गवे घोषकः स्याद्घोटकोऽश्वे निगद्यते ।
चषकस्तु सुरापात्रे मधुमद्यप्रभेदयोः ॥

चटकः कलविङ्के स्याच्चटका स्त्री स्त्र्यपत्ययोः ।
चलुकः प्रसृतौ भाण्डभेदे चुलुकवत्पुमान् ॥

---

१ ख० पते । २ ख. गेण्डुकं । ३ ख. कं ।
४ ख. के । ५ ख० हे ।

[1]चतुष्की मशकाहर्यां चतुष्की यष्टिकान्तरे ।
चतुष्की मत्स्यहार्यां स्यात् पुष्करिण्यन्तरेऽपि च ॥

चण्डिका तु भवेद्गौर्यां कोपनायां च योषिति ।
चरको ग्रन्थभेदे स्याच्चरकः स्थावरेतरे ॥

चणको धान्यभेदे च चर्चिको वाक्पटौ मतः ।
चन्द्रकः केकिपिच्छाङ्के कर्पूरेऽपि च चन्द्रकः ॥

चम्पकं चाम्पके पुष्पे पीते[2] गौरे तु वाच्यवत् ।
चारकः पालकेऽश्वादेः स्यात्सञ्चारकबन्धयोः ॥

चाक्रिकः कुम्भकारे स्याच्चाक्रिकश्चक्रवर्तिनि ।
चिचकः स्यादग्नितरौ चिचकं तिलके मतम् ॥

चीनको देशभेदेऽपि चीनाकं स्यात्फलान्तरे ।
चीरको विक्रियालेखे शिखायां चूडिका मता ॥

झिल्लिकायां चीरिका स्याच्चुबुकंत्वसिकाधरे ।
चुम्बकश्चुम्बनपरे धूर्तायस्कान्तकामुके ॥

बहुग्रन्थैकदेशज्ञे घटस्योर्ध्वावलम्बके ।
चूतकः कूपकेऽथाम्रे चूचुकं तु कुचाग्रके ॥

चुलुकः प्रसृतौ भाण्डभेदे [3]चलुकवन्मतः ।
चूलिका नाटकस्याङ्गे कर्णमूले च दन्तिनाम् ॥

चुल्लकी शिशुमारे च कुण्डीभेदे कुलान्तरे ।
गण्डूषे चुलकं प्राहुर्मधुमासे तु चैचकः ॥

---

१ क. चुटकी ।   २ क. पीतपुष्पे ।   ३ ख. चुल ।

चोलको[1] तु करीरे स्यान्नारङ्गे किष्कुपर्वणि।
कञ्चुक्यां चोलिका ख्याता चोरकर्मणि चौरिका॥

छत्रिका स्याद्भुजङ्गाख्यामातपत्रे तु छत्रकम्।
छत्राकं धरणीस्फोटे व्याजे छद्मकमीरितम्॥

छलकः कुहके प्रोक्तश्छादकस्तु निगूहके।
घातुके तक्षके चापि छेदकच्छेदिकावुभौ॥

जनको नृपभेदे स्यात्तातेऽपि जनको मतः।
जतुकाऽजिनपत्र्यां स्याज्जतुकं हिङ्गुलाक्षयोः॥

जल्पाकस्त्वतिवाचाले वावदूकेऽपि जल्पकः।
जम्बुकः पश्चिमाशायाः पत्यौ नीचे च गद्यते॥

वृक्षान्तरे फेरवे च जम्बूक इति गद्यते।
जाहको घोङ्घमार्जारखजाकातुण्डिकासु च॥

जालकं कोरके प्रोक्तं कुलाये जालिनीफले।
आनाये दम्भभेदे च वस्त्रभेदे च जालिका॥

जालिकाऽप्यङ्गरक्षिण्यां विधवाजालजीविनोः।
जालिकस्तूर्णनाभे स्याद् ग्रामकूटे च धीवरे॥

जानकी रामभार्यायां जङ्घाले स्यात्तु जाङ्घिकः।
[2]जीवन्त्यां जीविकामाहुस्तथा जीवनसाधने॥

जीवकः प्राणकेऽपि स्याच्छीर्षे स्यात्पीतसारके।
जीरकं जरणाख्ये स्यात्सुगते जिनको मतः॥

---

१ ख. का। २ ख. आजीवे।

जूर्णको धान्यभेदे स्याज्जोङ्गकं कृमिजे[१] मतम् ।
ज्योतिष्काः पञ्च चन्द्रार्कग्रहनक्षत्रतारकाः ॥

झरकः क्षरणे प्रोक्तो झरकस्तोयनिर्झरे ।
झावुकः पिचुले प्रोक्तो द्योतदीप्तौ च झल्लिका ॥

झल्लिकोद्वर्तनमले[२] झिण्ट्याम्बुद्वर्तनांशुके ।
[३]भृङ्गारिकायां झिल्लीका झिल्लिकाऽपि मता समा ॥

कट्वङ्गे टुण्टुकः प्रोक्तष्टुण्टुकः शोणकाल्पयोः ।
[३]डिम्बिका जलबिम्बे च कोणके कामुकस्त्रियाम् ॥

तर्जको भीषकनरे तक्षकः पन्नगान्तरे ।
तक्षको वर्धकौ च स्यात्तर्कुकस्तु मतोऽर्थिनि ॥

तण्डकः खञ्जने फेने समासप्रायवाचि च ।
गृहदारुतरुस्कन्धमायाबहुलकेष्वपि ॥

तन्त्रकं त्वहते वस्त्रे गुडूच्यां तन्त्रिका मता ।
तर्णकस्तु मतो वत्से त्र्यम्बकस्तु महेश्वरे ॥

तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि ।
कनीनिकायामक्ष्णोऽपि न पुमान् चातरि त्रिषु ॥

तान्त्रिको ज्ञातसिद्धान्ते प्रहस्ते तालिका मता ।
तिक्तकस्तु पटोले स्याद्रसभेदेऽपि तिक्तकः ॥

तिलकं क्लोम्नि तिलकस्तुरङ्गे तिलकालके ।
सौवर्चले पुनः क्लीबे ना तु रोगद्रुभेदयोः ॥

---

१ क. कुङ्कुमे, ख. कुसुमे । २ ख. पुटे ।
३ अयं पाठो मातृकायां जकारादिकचतुर्थेऽभूत् ।

त्रिशङ्कुर्नृपभेदेऽपि शलभे वृषदंशके॥
तिन्दुको वृक्षभेदे स्यात्त्रिलोकी विष्टपत्रये॥

तुरुष्को देशभेदे स्यादपि जात्यन्तरे मतः।
तुरुष्कः [1]सिल्हके ताम्रे तथा स्यात्पिण्डके क्वचित्॥

तृषितेऽर्थिनि तृष्णक्[2] स्यात्तोटकं वृत्तभिद्यपि।
तूलिका शयनीयोपकरणे लेखसाधने॥

तूष्णीको निष्क्रिये प्रोक्तस्तोदकः प्रेरके मतः।
दर्शकः स्यात्प्रतीहारे दर्शयितृ[3]प्रवीणयोः॥

दर्पकः पञ्चबाणे स्याद्दन्तको दन्तरुग्भिदि।
दग्धिका[4]भिःसटायां स्याद्द्राढायां[5] दंष्ट्रिका मता॥

दलिकं तु मतं काष्ठे दमकस्तु नृपान्तरे।
द्रावको ग्रावभेदेऽपि विदग्धे घोषकेऽपि च॥

दारको बालकेऽपि स्याद्भेदके[6] त्वभिधेयवत्।
दाधिकं[7] दधिसम्पन्ने दारुकः कृष्णसारथौ॥

बैडालिके दाम्भिकः स्याद्दाचकं काष्ठदारणे।
दीपकं वागलङ्कारे वाच्यवद्दीप्तिकारके॥

दीप्यकश्चाजमोदायां यवानीबर्हिचूडयोः।
दीर्घिकाऽऽख्या पुष्करिण्यां तूलिकायां तु दूषिका॥

---

१ ख. सिल्क। २ ख. व्। ३ ख. त। ४ ख. धिका।
५ ख. डायां। ६ ख. धके। ७ क. ग्धिकं।

तथा स्याल्लोचनमले गन्धकुल्यां तु [1]दृच्छकः ।
विहाराद्यवकाशेऽपि दूषकस्तु विदूषके ॥

[2]देवको भूपभेदेऽपि देवकी[3] कृष्णमातरि ।
दैहिकं देहसम्बद्धे देशिकस्तूपदेष्टरि ॥

दोलिका डोलिकायां स्याद्दोरकः सूचमाचके ।
धनिका स्यात्तु धन्याके धनिको धनवत्यपि ॥

धान्यकं धान्यमात्रे स्याद्धार्मिको धर्मचारिणि ।
धातकी तरुभेदे स्याद्धानुष्कस्तु धनुर्धरे ॥

ध्रुवकस्तु मतः स्थाणौ गणिताङ्गे क्वचिन्मतः ।
धेनुका तु करिण्यां स्याद्धेनुको दानवान्तरे ॥

धेनुकं करणे स्त्रीणां धेनुसङ्घेऽपि तन्मतम् ।
नर्तकः स्यात्पोटगले[4] केलके चारणे नटे ॥

नर्तकी तु करेण्वां स्याल्लासिकायां च योषिति ।
नग्नकः क्षपणे नग्ने बाले नग्नक ईरितः ॥

नग्निका च कुमार्यां स्यान्नक्तकः कर्पटे मतः ।
नन्दकः स्याद्विष्णुखड्गे हर्षके कुलपालके ॥

नरको निरयेऽपि स्यादसुरेऽपि क्वचिन्मतः ।
नगौकाः पक्षिमात्रेऽपि नलिका सान्तरेऽस्थिनि ॥

निरये नारकोऽपि स्यान्नारको निरयस्थिते ।
नारकं निरयोद्भूते नास्तिको वेदनिन्दके ॥

---

१ क. दू । २ ख. दि । ३ ख. कि । ४ ख. कले ।

नालीकमब्जे बाणे ना[1] तथा शल्यास्त्रयोरपि।
नाशकस्त्वन्तके रोगे शाकभेदे तु नालिका॥
नाडिका कालमानेऽपि काण्डरायां च नाडिका।
नायकौ नेतरि प्रोक्तौ हारमध्यमणावपि॥
नीलिका नीलिनीक्षुद्ररोगसेफालिकासु च।
निर्मोको मोचने व्योम्नि तथा च फणिकञ्चुके॥
निरोका भिक्षुमात्रेऽपि निन्दकस्त्वपवादके।
रूप्याध्यक्षो नैष्किकः स्यान्नोदकः प्रेरके मतः॥
पराक[2]स्तु व्रते खड्गे प्रसेकः सेचने च्युतौ।
पद्मकं पद्मकाष्ठेभबिन्दुजालकयोर्मतम्॥
पक्षकः पार्श्वमात्रेऽपि पक्षद्वारे च संमतः।
पताका वैजयन्त्यां स्यात्सौभाग्येऽङ्क[3]ध्वजेऽपि च॥
पर्यङ्को मञ्चके प्रोक्तः पल्यङ्कोऽपि निगद्यते।
प्रतिकूले प्रतीकः स्यात्तथाऽवयवमात्रके॥
पर्शुकस्त्वायुधभिदि पर्शुका पार्श्वकीकसे।
प्राणको जीवकतरौ पार्श्वकः सन्धिजीविनि॥
पाशकः प्रासकश्चाक्षे प्रासिकः कुन्तयोधिनि।
पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके॥
भल्लातके विडङ्गे च पातुको जलहस्तिनि।
पतयालौ प्रपाते च [4]पातुकस्त्वभिधीयते॥

---

१ क. च। २ ख. कु। ३ ख. ॰ग्याङ्क।
४ ख. पादितः पावकध्वनिरिति पाठभेदः।

पादुका पादरक्षिण्यां पालयित्र्यां तु पालिका ।
पालङ्कः स्याच्छाकभेदे [1]पाटको वाद्यभिद्यपि ॥
पाटकश्च महाकिष्कौ तथा स्यात्कटकान्तरे ।
अक्षादिचालने मूलद्रव्यापचयरोधसोः ॥
पिण्याकस्तिलकल्के स्याद् हिङ्गुबाल्हीकसिल्हके ।
पीतको वर्णभेदे स्यात् पिनाको रुद्रधन्वनि ॥
मञ्जूषायां तु पिटको विस्फोटे पिटको मतः ।
पिण्डकः सिल्हके प्रोक्तः पिण्डिकाऽवयवान्तरे ॥
पिष्टको घृतंपूपे स्यान्नेत्ररोगे च गद्यते ।
प्रियकः पीतसाले[2] स्यात्प्रियकश्चासिते मृगे ॥
पुलाकः[3] स्यात्तुच्छधान्ये सङ्क्षेपे भक्तसिक्थके ।
पुलकः कृमिभेदेऽश्मभेदे च मणिदूषणे ॥
[4]गजान्नपिण्डे गन्धर्वे रोमाञ्चहरितालयोः ।
पुष्यकं रीतिकानेत्ररोगयो रत्नकम्बले(ङ्कणे?) ॥
कुबेरस्यापि याने स्यात्कासीसे च रसाञ्जने ।
लोहकांस्यमृदङ्गारशकट्यामपि पुष्पकम् ॥
स्वर्णचूडे पूर्णकः स्यान्नासाछित्त्यां तु पूर्णिका ।
पूलिका पूपिका चापि पोलिकायामुभौ मतौ ॥
पुत्रिका तु स्त्र्यपत्ये स्यात्पुत्रिका शालभञ्जिका ।
पुत्रकः पुमपत्येऽपि तथा मन्थनसाधने(?) ॥

१ ख. वाढ । २ क. सारे । ३ ख. कं ।
४ रोमाञ्चे हरिताले गजान्नपिण्डेऽपि गन्धके, इति मा० पाठः ।

तथैव शरभे धूर्ते शैलवृक्षप्रभेदयोः ।
[1]रोमोद्गमे तु पुलकः पुण्यकं तु व्रतान्तरे ॥
पुष्पिका स्याल्लिङ्गमले पुण्ड्रकस्त्वतिमुक्तके ।
पुस्तकं लेखपत्रे स्यात्पृदाकुर्वृश्चिकेऽप्यहौ ॥
पृदाकुश्चित्रकतरौ व्याघ्रेऽपि च निगद्यते ।
पृषत्कस्तु खगे बाणे पृथुकश्चिपिटेऽर्भके ॥
प्रेरकः प्रेषकश्चोभौ कथितौ तु नियोजके ।
पेचकः करिलाङ्गूले [2]मूलोपान्ते च कौशिके ॥
मञ्जूषायां कदम्बे तु [3]वस्त्राधारे च पेटकः ।
पोलिकाऽपूपभेदे स्याद् [4]बाह्यारामे तु पौरकः ॥
फञ्जिका स्याच्छाकभेदे फलकं काष्ठपट्टके ।
फलकी मत्स्यभेदे स्याद्वाच्यवत्फलकान्विते ॥
बन्धूकं बन्धुजीवे स्यात्सम्बन्धिनि तु बन्धुकः ।
बन्धूकः पीतशाले[5] च स्यात्साक्षिणि तु बन्धकः ॥
बन्धकं स्याद्विनिमये पुंश्चल्यामपि बन्धकी ।
बालिका कर्णभूषायां बालायां बालकः शिशौ ॥
मूर्खे च बाधकः शचौ प्रतिकूले तु बाधकम् ।
बाष्पिका त्वौषधिभिदि नेत्रसारे[6] च बाष्पकम् ॥
बहुकः कर्कटेऽर्के च दात्यूहे जलखातके ।
बैजिकं शिग्रुतैले स्याद्बैम्बिको बिम्बजीविनि ॥

१ पुलको घर्मबिन्दौ स्यादिति मा० पाठः ।
२ ख. अधिकः पाठः । ३ क. पुस्ता । ४ क. ख. वात्यायां पौरको मतः । इति पाठः । ५ क. सारे । ६ ख. सौरे ।

वैतालिके बोधकः स्यात्कालज्ञानिनि बोधकः ।
भस्मकं स्याद्रोगभेदे भसिते भस्मकं मतम्[1] ॥
वार्ताक्यां त्वथ भण्टाकी भण्डको हास्यकारिणि ।
भविकं भावुकं भव्ये भावुको भगिनीपतौ ॥
भालाङ्कः करपत्रे स्याच्छाकभेदे च रोहिते ।
कच्छपे पुरुषश्रेष्ठे [2]तथा स्मरहरेऽपि च ॥
सूर्यावर्ताश्मभेदेऽपि जम्बुके भ्रामको मतः ।
विषे च भ्रामकं[3] प्रोक्तं भारिको भारहारिणि ॥
नृपान्तरे भीमकः स्याद्भीरौ भीरुकभीलुकौ ।
यतिक्षपणयोः प्रोक्तो भिक्षुको भैक्षहारिणि ॥
नृपान्तरे भीष्मकः स्याद्भीषको भयदर्शके ।
भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे ॥
भूतीकमपि भूनिम्बदीप्यकर्पूरकत्तृणे[4] ।
भौरिकः कनकाध्यक्षे भौतिकं [5]भूतनिर्मिते ॥
अलिञ्जरे तु मणिको मल्हिकामिल्हिके हिमे ।
मरकः स्यान्महामार्यां मायिकः कुहके मतः ॥
उदुम्बरे तु मशकी मशकः सूक्ष्मजन्तुके ।
रोगभेदे च मशको मधुको विहगान्तरे ॥
मधुका मधुपर्ण्यां स्यान्मधुकस्तु मधुद्रुमे ।
क्लीतके मधुकं प्राहुर्मधुकं त्वौषधान्तरे ॥

---

१ ख. विडङ्ककलधौतयोरिति पाठभेदः ।
२ ख. पु० इतः पादद्वयस्याधिकः पाठः ।
३ ख. भ्रामिकं ।
४ ख. तृणे ।
५ ख. भूति ।

मण्डूकं बन्धभेदे च मण्डूको दर्दुरे मतः ।
मण्डूकपर्ण्यां मण्डूकी मल्लिका पानभाजने ॥
मल्लिको हंसभेदेऽपि तृणशून्येऽपि मल्लिका ।
मीने मत्स्याचभेदेऽपि मस्तिष्कं मस्तुलुङ्गके ॥
मन्दारो वृक्षभेदे स्याद्वर्षाकालेऽप्युदीरितः ।
मातृका धातृकामाचोर्देवीभिद्वर्णमालयोः ॥
मामकं तु मदीये स्यान्मामकः स्यात्तु मातुले ।
मालिकः पक्षिणि, ग्रीवालङ्कृतौ सरिदन्तरे ॥
सप्तलायां च मालायां पुष्पाणां मालिका मता ।
मासिकं श्राद्धभेदेऽपि भृत्यर्थे मासिको मतः ॥
मालकः[1] स्यादरिष्टे तु माक्षिकं मधुनि स्मृतम् ।
मुण्डकः स्यात्तु ग्रामण्यां मूलकं पर्णमूलके ॥
मृद्वीका हारहूरायां[2] मेचकः शिखिचन्द्रके ।
स्रोतोऽञ्जनेऽन्धकारे च श्यामले च निगद्यते ॥
मेनका हिमवत्पत्न्यामपि स्यादप्सरोभिदि ।
बहूनामथ सङ्गे तु मेलकः परिकीर्तितः ॥
मोदको हर्षजनके खाद्यभेदे तु मोदकम् ।
मोचकः कदलीशिग्रुनिर्मोचकविरागिषु ॥
यमकं यमजे शब्दालङ्कारे संयमेऽपि च ।
याजकस्तु[3] गजे राज्ञो यज्वन्यप्यथ याज्ञिकः ॥

---

१ ख. सिकः ।
२ हरहूरायामिति मातृकापाठः ।
३ ख. सु ।

याजके च कुथे चापि शब्दवेदिभिरीरितः।
याचको मार्गणे प्रोक्तो यवान्नेऽपि तु यावकः॥
याष्टीकः[1] स्याद्यष्टिधरे युतकं संशये युगे।
यूथिकाऽम्लानके पुष्पे द्रुमभेदेऽपि यूथिका॥
यौतकं युतयोर्देये स्त्रीवस्त्राञ्चलयुक्तयोः।
रजको धावके कीरे रसिको रसवत्यपि॥
रसालेऽपि रसालायां काञ्चीरसनयोः स्त्रियाम्।
रक्ताङ्गोऽथ प्रवाले स्याद्रक्तिका स्वर्णमानके॥
रक्तकोऽम्लानबन्धूकरक्तवस्त्रानुरागिषु।
रल्लकः कम्बले ख्यातो रसकः क्वाथधातुनि॥
येन वेश्यागृहे नीतो वत्सरस्तत्र राचकः।
क्लीबं स्यात्पञ्चरात्रे तद्राजसङ्घे तु राजकम्॥
राजिकाऽपि च केदारे राजसर्षपरेखयोः।
रौढकः पृष्ठवंशे स्याद्रौढकोऽप्यपमानकृत्॥
रुचकः स्यादथैरण्डे रुचकं लवणे तथा।
रुचको बीजपूरद्रौ निष्के दन्तकपोतयोः॥
न द्वयोः सर्जिकाक्षारेऽप्यश्वाभरणमाल्ययोः।
सौवर्चलेऽपि माङ्गल्यद्रव्ये चाप्युत्कटेऽपि च[2]॥
रुचिकस्तु ऋषेर्भेदे रुचिकश्च नृपे क्वचित्।
रुण्डिका द्वारपिण्ड्यां च दूतिकायां रणक्षितौ॥

१ याष्टिकः इति क्रमभ्रष्टो मातृकापाठः।
२ क. ऽपि कटकेऽपि च।

रूपकं नाटके मूर्ते काव्यालङ्करणेऽपि च ।
रेणुका च हरेणौ च जामदग्न्यस्य मातरि ॥
रेचकस्त्वौषधभिदि प्राणसंयमनेऽपि च ।
लक्षकः[1] स्यात्सूक्ष्मदृशि लम्बमाने तु लम्बकः ॥
योगान्तरे लम्बिका स्याद्धनुर्मध्ये तु लस्तकः ।
लतार्कस्तु पलाण्डौ स्याद्वल्लर्यां लतिका मता ॥
लम्पाको लम्पटे देशे भुजिष्यायां तु लञ्जिका ।
लग्नकस्तु प्रतिभुवि मतं नृत्ये तु लास्यकम् ॥
लासको लसके लास्यकारिण्यपि मयूरके ।
पक्षिभेदे लावकः स्यात्तथा लवनकर्तरि ॥
लुब्धकस्तु मतो व्याधे लुञ्चकः क्षपणे स्मृतः ।
लूणको भिदितपशौ लूचकं तूपनेचके ॥
लेखकः स्याल्लेखनके लेपकः परिमार्जके ।
लेण्डकं तु पुरीषे स्याल्लोणिका त्वौषधान्तरे ॥
लोचको मांसपिण्डेऽक्षितारकायां च कज्जले ।
ललाटाभरणे स्त्रीणां कदलीनीलवस्त्रयोः ॥
निर्बुद्धौ कर्णपूरे च मौर्व्यां भूश्लथचर्मणि[2] ।
मृगान्तरे लोहकः स्याल्लोध्रकं त्वौषधान्तरे ॥
वरको वनमुद्गे स्यात्कुटजे वत्सको मतः ।
भक्ष्यभेदे तु वटको वीणायां वल्लकीं विदुः ॥

---

१ ख. कं।   २ ख. कर्मणि।

वर्चस्कं तु पुरीषे स्याद्वर्धकिः काष्ठतक्षके ।
व्यलीकमप्रियाकार्यवैलक्ष्येष्वति[1]पीडने ॥
व्यलीको नागरे प्रोक्तः पुंसि शब्दार्थवेदिभिः ।
वञ्चकस्तु खले धूर्ते गृहबभ्रौ च जम्बुके ॥
वराकः [2]सङ्गरे शोच्ये शङ्करेऽपि निगद्यते ।
व्यञ्जकः स्यादभिनये व्यञ्जकः कार्यसूचके ॥
वसुकं [3]रौमके पुंसि शिवमल्ल्यर्कपर्णयोः ।
वर्णकश्चारणे[4] स्त्री तु चन्दने च विलेपने ॥
द्वयोर्नौल्यादिषु स्त्री स्यादुत्कर्षे काञ्चनस्य च ।
वर्त्तकस्तु खुरेऽश्वस्य वर्तिका विहगान्तरे ॥
[5]वातकः शणपर्ण्यां स्याद्व्याधिभेदे च वातकः ।
वासुकिः सर्पराजे स्याद्वार्णिको वर्णकारके ॥
अटरूषे वासकः स्याद्देशभेदे तु वाह्लिकः ।
वारकोऽश्वगतावश्वविशेषे च निषेधके ॥
वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणि ।
अङ्गुलीयकह्रीबेरपारिहार्येषु वालकम् ॥
वाल्हीकस्तुरगे देशभेदे स्याद् धीरहिङ्गुनोः ।
अनयोरपि वाल्हीकं वाल्हिकं च निगद्यते ॥
त्रायमाणे वार्षिकं स्याद्वर्षाकालभवेऽन्यवत् ।
सन्देशवाग्वाचिकं स्याद्वालुकं त्वेलवालुके ॥

---

१ ख. पि । २ ख. प्राङ्क । ३ क. रौ ।
४ ख. वरे । ५ ख. वाद ।

वालुका सिकतायां स्याद्वालकं भूषणान्तरे[1] ।
विपाकः पचने खेदेऽप्यसत्कर्मफलेऽपि च[2] ॥
कपोतपालिकायां तु विटङ्क इति गद्यते ।
वितर्कः संशये चोहे विवेकस्तु पृथक्कृतौ ॥
विवेकः सलिलद्रोण्यां विचारेऽपि च कथ्यते ।
विरोकस्तु प्रकाशे स्याद्विरेकः स्यात्प्रवाहणे ॥
विव्वोकः स्त्रीविलासे स्याद्वीजकस्तत्क्रियावति ।
वृश्चिकः शूककीटे स्याद्राश्यौषधद्रुणेष्वपि ॥
वृषाङ्कः शङ्करे साधौ भल्लातकमहोक्षयोः ।
वेदिका तु वितर्द्यां स्याद्वैदिको वेदवेत्तरि ॥
वैणुकं तु गजालाने वैणिको वेणुवादके ।
वैणिको वैणविके स्याच्छशाङ्कश्च कलाधिपे ॥
कर्पूरस्य तथा पिण्डे, शम्पाकश्चतुरङ्गुले ।
शस्त्रिका छुरिकायां स्याच्छङ्खः शम्बूकशब्दभाक् ॥
शङ्खकं कङ्कणभिदि शम्बूका जलशुक्तिषु ।
शल्लकी स्यात्तरुभिदि शम्बुकः शूद्रतापसे ॥
घोङ्गे च गजकुम्भान्ते, शलाका कामशल्ययोः ।
शारिकायां च शल्लक्यां शल्लकी पशुवृक्षयोः ॥
[3]छत्रादिकाष्ठीशरयोः शालूकं पद्मकन्दके ।
शालिका स्त्रीभगिन्यां स्याच्छाक्तिकस्तु तदायुधे ॥

---

१ ख. वाद्यको वाद्यकर्तरि, इति पाठभेदः ।
२ ख. कर्मणोऽप्यसदृक् फले, इत्यन्यथा पाठः ।
३ ख. आम्रा ।

शारिका पक्षिभेदे स्याच्छाब्दिकः शब्दवेदिनि ।
श्यामाकस्तृणधान्ये स्याद्रोगभेदे तु शीतिकः ॥
शीतकः शीतकाले च सुस्थिते दीर्घसूत्रिणि ।
शिरस्कं स्याच्छिरस्त्राणे शिशुकः शिशुमारके ॥
बालकोलूपिनोश्चापि शिबिका नरवाह्यके ।
शूककः क्षारभेदे स्यात् किंशारौ शूककं[1] मतम् ॥
शूककः प्रावटे प्रोक्तो रसेऽपि परिकीर्तितः ।
रक्तप्रियङ्गौ गदिता शोधिका शोणकः पुनः ॥
[2]टुण्टुके शौण्डिको मद्यकर्तर्यपि च हारके ।
सस्यको मणिभेदे स्याद्धान्यमाने तु सस्यकम् ॥
स्यमीको वृक्षभेदे स्यात्स्यमीका नीलिकौषधौ ।
सम्पाकस्तार्किके धृष्टे सम्पर्को मेलके रतौ ॥
स्वस्तिको मङ्गलद्रव्ये चतुष्कगृहभेदयोः ।
सरकः सीधुपाने स्यात्सीधुपात्रे[3]क्षुसीधुनोः ॥
अच्छिन्नाध्वगपङ्क्तौ च सरकः समुदीरितः ।
सभिकः स्याद् द्यूतकारे रशनायां तु सप्तकी ॥
युद्धे समीकं निर्दिष्टं स्फटीकः स्फटिके मतः ।
सायकस्तु शरे खड्गे [4]स्थासको जलबुद्बुदे ॥
स्थानिकः स्थायिनि मतः सार्पिष्कं घृतनिर्मिते ।
स्थायिको ग्रामरक्षार्थे स्नातकस्तु समाप्तते ॥

---

१ सस्यशूककर्ममिति समस्तस्य सत्येतिवन्निर्देशोऽयम् ।
२ डुण्डु, इति मातृकायामपपाठः । ३ ख. माने । ४ क. सा ।

स्थायुकोऽपि ग्रामपाले स्फूर्जकस्तिन्दुके मतः।
सूचकः सीवनद्रव्ये बोधके पिशुने शुनि॥
ओतौ काके सूतकस्तु पारदे सूतकं जनौ।
सृदाकुर्ज्वलने चक्रे(वज्रे?) पवने प्रतिसूर्यके॥
[1]सृणिका त्वोष्ठयोः प्रान्तभागे निगदिता बुधैः।
सेचकस्तु भवेन्मेघे वाच्यलिङ्गस्तु सेक्तरि॥
सेवकस्तु प्रसेवे स्याद्वाच्यलिङ्गोऽनुजीविनि।
सैन्यकः सैनिके प्रोक्तः सैन्यरक्षे तु सैनिकः॥
सौप्तिकं युद्धरात्रौ स्यात्सोमाङ्गे सौमिकं मतम्।
सौचिकः स्यात्सीवनके सौनिको वधभूमिगे॥
हंसकं पादकटके हंसको मानसौकसि।
यतौ सदाशिवेऽपि स्याद्धल्लकं रक्तसन्ध्यके॥
हाटकं तु सुवर्णे स्याद्धस्तिसङ्घे तु हास्तिकम्।
हालिकः कर्षके मूर्खे[2] भवेद्धास्ये तु हासिका॥
हारकः कितवे चोरे गद्यविज्ञानभेदयोः।
हीरकं तु भवेद्वज्रे हिरण्डकोऽजस्रगामिनि॥
[3]हुडुक्को वाद्यभेदे स्यान्मत्तदात्यूहपक्षिणि।
शब्दवेदिभिरप्युक्तं हृषीकं विषयेन्द्रिये॥
हेरुकः स्याद्बुद्धभेदे महाकालगणे तथा।
हेरिको गूढपुरुषे [4]ह्रेषको ह्रीविधायके॥

---

१ लालायामित्यमरादयः।

२ गौर्वाह्निक इति वद्धौणोऽयम्। ३ ख. ऊडुको।

४ ह्रेष, अव्यक्तेशब्दे, इत्यस्मात्कर्त्तर्यर्थे ण्वुलि निष्पन्नस्यास्य ह्रीविधायकत्वमार्षम्।

होलिका स्यात्कर्मभेदे स्यात्तद्विदि तु हौलिकः ।
क्षणिकां विद्युति प्राहुः क्षारकः स्यात्तु जालके ॥
तथा मत्स्यादिपिटके नीचे तु क्षुल्लको मतः ।
[1]क्षुल्लकः शङ्खजातीयकीटपृष्ठस्थकीकसे ॥
क्षुरको वपनद्रव्ये गोक्षुरे तिलकद्रुमे ।
क्षुरकः कोकिलाक्षे स्यात्क्षुब्धकः क्रोधमूर्च्छिते ॥
प्रवर्तके क्षेपकः स्यादरातौ क्षोभको मतः ।
क्षोभकस्तु समुद्रेऽपि क्षोदकः शोधके मतः ॥

॥ इति कतृतीयम् ॥

---

॥ अथ कचतुर्थम् ॥

अङ्गारकः कुरण्टे स्यादुल्मुकांशे महीसुते ।
अङ्गारिकाऽङ्गारधान्यां तथा किंशुककुड्मले ॥
अङ्गारिका चेक्षुकाण्डे गदिता शब्दवेदिभिः ।
अलावलिमको भेके कोकिले पद्मकेसरे ॥
स्यादश्मन्तकमुद्धाने [2]मल्लिकाच्छदनेऽपि च ।
अश्मन्तको वृक्षभेदेऽनर्थको निष्प्रयोजने ॥
अनामिकाऽङ्गुलीभेदे चण्डाले स्यादनामकः ।
अनास्तिको वेदवाह्ये वेल्लिते स्यादरालकः ॥

---

१ ख. पु० नायं पाठः ।
२ मालुकाच्छादनेऽपि च, इति मातृकापाठः ।

अयाचकस्तु गदितः प्रतिग्रहविवर्जिते।
द्वारावरोधेऽर्गलिकाऽपटिका काण्डपट्टके॥

अनासिकस्तु विग्रे स्यात्पर्वतोर्ध्वे त्वधित्यका।
अट्टालिकाऽपि सौधाग्रे विधवाऽनलका मता॥

आकल्पकस्तमोमोहग्रन्थ्यावु[1]त्कलिकामुदोः।
आक्षेपकोऽनिलव्याधौ व्याधे निन्दाकरेऽपि च॥

मूषके स्यादाखनिकश्चोरे चापि च सूकरे।
आवेशिकः प्राघुणके चण्डे त्वाक्रोशको मतः॥

आगन्तुकः स्यादतिथौ वैश्ये त्वापणिको मतः।
आम्रातकः पीतनके मता त्वा[2]यल्लकाऽरतौ॥

आकालिकी विद्युति स्यादाखुभुक् तु बिडालके।
आख्यायिकोपलब्ध्यार्थाऽऽलम्बकस्तु तताङ्गके॥

धात्रीफले त्वामलकं धात्र्यामामलकी मता।
आवेशिकं स्यादातिथ्ये विद्या त्वान्वीक्षिकी क्वचित्॥

आवेदको ज्ञापके स्यान्मूर्खे त्वागारिको भवेत्।
आमोदको हर्षकारिण्यपि सौगन्धिके भवेत्॥

[3]आभासिकः क्वचिमे स्यादावेशिकस्तु प्राघुणे।
आटीककं तर्णकाल्याः स्थलीषु क्रीडने मतम्॥

इन्द्राणिका स्यान्निर्गुण्ड्यां दैवज्ञेक्षणिकौ समौ[4]।
उत्सारको दण्डधर उत्कण्ठोत्कलिके समे॥

---

१ क. गन्ध उ। २ क. यच्छ। ३ ख. पु० नायं पाठः।
४ दैवज्ञोत्तयिको मतः। इति मा० पा०

[1]कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु ।
उपासकः सेवके स्यादूर्ध्वलोकस्त्रिविष्टपे ॥

उपत्यकाऽद्रेरासन्नभूमावुक्ता मनीषिभिः ।
एरण्डे [2]तूरुवूकः स्याद् घटीयन्त्रे तु शाब्दिकाः ॥

उद्घाटकं विदुश्चोपधान उच्छीर्षकं मतम् ।
एडमूकोऽन्यलिङ्गः स्याच्छठे वाक्श्रुतिवर्जिते ॥

कटिल्लकस्तु पर्णासे वर्षाभूकारवेल्लयोः ।
कपर्दको जटाजूटे धूर्जटेश्च वराटके ॥

कर्कोटकः स्यान्मालूरकाद्रवेयप्रभेदयोः ।
कलविङ्कः स्मृतो ग्रामचटके च कलिङ्गके ॥

कनीनिका तारकेऽक्ष्णः स्यात्कनिष्ठाङ्गुलौ च सा ।
कलामकस्तु कलमे करशूकं नखे मतम् ॥

कलन्दिका सर्वविद्या पृष्ठास्थनि [3]कशेरुका ।
कदम्बकः [4]समूहे स्यान्मरीचादौ कटुचिकम् ॥

[5]कम्पिल्लिकौषधिभिदि [6]कण्डोलः पिटके मतः ।
[7]कर्परिकाऽमृतासङ्गे भवेत्कट्टारिकाऽऽयुधे ॥

कञ्चुलिका तु कूर्पासे प्रकोष्ठे तु कलाचिका ।
स्यात्कुलीरे कर्कटकः तथा राश्यन्तरेऽपि च ॥

---

१ ख. पु. इदं पादद्वयं नास्ति । २ ख. तूर । ३ क. कसे ।
४ (स्तु हंसे) इत्यभयपु. पाठः ।
५ ख. पु. नास्त्ययमर्धश्लोकः ।
६ कण्डोलः । इत्ययं पादः ककारादिलटतीये न्याय्यः ।
७ कपर्दि, इति मा. पाठः ।

कङ्कोलकं कोशफले बर्हिबर्हे कलापकः ।
केशप्रसाधनद्रव्ये तथा कङ्कतिका मता ॥
कार्तान्तिकस्तु दैवज्ञे कृतान्तस्य गणेऽपि च ।
काकरूकोऽप्युलूके स्यान्निःस्वे स्त्रीजितदम्भयोः ॥
दिगम्बरे भीरुके च स्यात्कामान्तक ईश्वरे ।
काकलकः कण्ठमणावूर्जे कार्तिकिको मतः ॥
भक्ष्यकारे कान्दविकः कारणिकः परीक्षके ।
कृपाशीले कारुणिकः कालीयकं च जोङ्गके ॥
अपि कावचिकं प्राहुर्बुधाः कवचिनां गणे ।
कामन्दको मुनेर्भेदे भीते कान्दिशीकः स्मृतः ॥
कापटिकोऽन्यमर्मज्ञे छात्रे स्यात्कालदेशिनि ।
अथ क्लीतकिका [१]नील्यां किरणाङ्को दिवाकरे ॥
भूलतायां [२]किञ्चुलुको वनमुद्गे कुलीनकः ।
निःस्वे (?) कुरबकः शोणाम्लानझिण्टिप्रभेदयोः ॥
कुरण्टकः पीतपुष्पाम्लानझिण्टिकयोः पुमान् ।
तुवर्यां च कुलाल्यां[३] च कस्तूर्यां (?) च कुलत्थिका ॥
कूष्माण्डकोऽस्रपभिदि फले कूष्माण्डकं मतम् ।
कूष्माण्डकस्तु कर्कारौ कुम्भ्यां कुमुदिका मता ॥
कूर्पासकः कञ्चुके स्याद्वृध्याजीवे कुसीदकः ।
कुमारकस्तु वरणे कार्तिकेयकबालयोः ॥

---

१ नित्यामिति उभयत्रापि लेखकप्रमादः ।

२ ख. किञ्चलू ।  ३ ख. न्या ।

कुन्दुरुकी तु सल्लक्यां कुन्दुरुकस्तु[1] तद्भवे ।
कुमालकस्तु सौवीरदेशे कुम्भाण्डकोऽसुरे ॥
कुठेरकस्तु कथितः शब्दविद्भिः कठिञ्जरे ।
कृपाणिकाऽसिपुत्र्यां स्यादसौ तूक्तः कृपाणकः ॥
कृकाटिका तु घाटायां कृकवाकुर्मयूरके ।
कृकवाकुश्च सरटे तथैव चरणायुधे ॥
कैराटकस्तु गदितः शब्दविद्भिर्विषान्तरे ।
कोशातकी[2] पटोल्यां च पुंसि [3]घोषककेशयोः ॥
[4]स्यात्कौशलिकमुत्कोचे खड्गे कौक्षेयकं विदुः ।
कौलेयको निगदितः शुनि चापि महाकुले ॥
कौमोदकी गदाभेदे लोपामुद्रा तु कौषिकी[5] ।
भवेत्कौक्कुटिकोऽदूरप्रेरिताक्षे च दाम्भिके ॥
भण्डनाराचोपधानग्रामणीषु खरालिकः ।
भवेत्केलिकिले शस्त्राभ्यासभूमौ खलूरिका ॥
गवेधुका बीजभेदे गर्भपाकी तु षष्टिके ।
ग्रामेयकस्तु ग्रामीणे ग्रासे गुडेरकं विदुः ॥
गिरियकः क्रीडनीये नृत्ये गुणनिकां विदुः ।
तथा गुणनिकां प्राहुः शून्याङ्के पाठनिश्चये ॥
ग्रैवेयकं न द्वयोस्तु मतं ग्रीवाविभूषणे ।
गोकण्टको गोक्षुरके स्थपुटे च गवां खुरे ॥

---

१ ख. स्तदु॰ २ क. नकी । ३ क. ख. तथा ।
४ स्यात्कोश्या इति मूलपु. पाठः । ५ कौषीतकी, इति युक्तः पाठः ।

गोमेदकं मणौ पीते काकोले पत्रकेऽपि च ।
वल्लिरे स्याद्गोकुलिकः[1] पङ्कस्थगव्युपेक्षके ॥
गोजिह्विका शाकभेदे गोष्ठे गोस्थानकं[2] विदुः ।
अथ घर्घरिका क्षुद्रघण्टावादित्रदण्डयोः ॥
चर्चरीको महाकाले केशविन्यासशोकयोः ।
चण्डालिका किन्नरायामुमायामौषधान्तरे ॥
कोविदारे चमरिकश्चञ्चरीकस्तु षट्पदे ।
चण्डारिका भक्ष्यभेदेऽगदङ्कारे चिकित्सकः ॥
चक्रवाकश्च चक्राङ्के तथोक्तः कोकपक्षिणि ।
चण्डातकं चलनकस्त्वधोरुकांशुके मतम् ॥
अथ चातुरकश्चक्रगण्डौ पुंस्यभिधेयवत् ।
गोचरे लोचनस्यापि चाटुकारे नियन्तरि ॥
जर्जरीकं बहुच्छिद्रे [3]जरातुरे निगद्यते ।
जलालोका जलौकायां प्रलये तु जिहानकः ॥
विषवैद्ये जाङ्गलिको जागरूकस्तु जाग्रति[4] ।
जीवान्तको वागुरिके विषे जीवान्तकं मतम् ॥
जीवन्तिका गुडूच्यां स्याज्जीवाख्यशाकवन्द्ययोः ।
जीवत्तोका जीवद्वत्सा वृत्तौ जीवनिका मता ॥
मृत्युलोके जीवलोकोऽमृतं जीवनकं मतम् ।
जैवातृकस्त्वौषधीशे [5]कृशकायुष्मतोरपि ॥

---

१ त्वाग्णिकः, इति मातृ. पाठः । २ क. निकं ।
३ क. रजतेऽपि । ४ ख. के । ५ ख. कृति ।

तर्त्तरीकं वहित्रे स्यान्न द्वयोः पारगे त्रिषु ।
तिक्तशाकस्तु खदिरे वरुणे पत्रसुन्दरे ॥
फलत्रिके त्रिकटुकं गोक्षुरेऽपि त्रिवर्णकम्[1] ।
त्रिकण्टको गोक्षुरके जलजस्थावरान्तरे[2] ॥
त्रिपत्रकः स्यान्मालूरेऽप्यायुधे स्यात् त्रिशीर्षकम् ।
रेखात्रयान्विते भाले[3] त्रिपताकमितीरितम् ॥
त्रिशीर्षको दैत्यभेदे तिन्तिडीकं तथौषधे ।
तीक्ष्णशूको यवे क्षारे काञ्जिके तु तुषोदकम् ॥
काञ्च्यां मता तुवरिका शरे तेजनकाऽभिधः ।
रङ्गाजीवे तौलिकिको बौद्धे तौतातिको मतः ॥
तौर्यत्रिकं नृत्तगीतवाद्यत्रिकमुदीरितम् ।
दलाढकः[4] स्वयञ्जाततिले प्रश्न्यां च गैरिके ॥
फेनखातकयोर्नागकेसरे च महत्तरे ।
दयालुकः कृपायुक्ते दन्दशूकः सरीसृपे ॥
दयालुकः कारुणिके[5] देशभेदे दशेरकः ।
दासेरकस्तु करभे दासीपुत्रे च कीर्तितः ॥
कर्चूरके द्राविडको देशे जात्यन्तरेऽपि च ।
द्विनग्नको दुश्चर्मणि रूप्ये दुर्वर्णकं मतम् ॥
वृध्याजीवे [6]द्वैगुणिको द्वाःस्थे दौवारिको मतः ।
अथाश्वानां गतावुक्तं सद्भिर्धौरितकं[7] त्विति ॥

---

१ स्तुकमिति मा. पाठः ।
२ त्रिकण्टके गोक्षुरके जनस्थाने त्रिकण्टकमिति मा. पाठः ।
३ ख. भोगे । ४ क. टकः ।
५ दयालुकस्तु कारुण्य इति मा. पाठः । ६ क. द्वौ ।
७ दौवारिकमिति मा. पाठः ।

नपुंसको भवेत्षंढे, पोतवाहे नियन्तरि ।
नियामकः कर्णधारेऽप्युक्तो, निश्चारकस्तथा ॥
पुरीषस्य क्षये स्वैरे तथैव च समीरणे ।
निर्ग्रन्थकः[1] स्यात्क्षपणे निष्फलेऽप्यपरिच्छदे ॥
निकोचकः [2]स्यादङ्कोटे कञ्चुके च निचोलकः ।
एकान्ते निःशलाकः स्याद्वनमुद्गे निगूढकः ॥
निर्दिग्धिका भवेद् व्याघ्र्यां निन्दकेऽपि निवारकः ।
निरर्थकोऽर्थशून्ये स्यादक्षपादे तु कथ्यते ॥
नैयायिकोऽथ निस्त्रिंशायुधे नैस्त्रिंशिकं विदुः ।
प्रचलाकः शराघाते शिखण्डे च भुजङ्गमे ॥
प्रकीर्णकं चामरे स्याद्विस्तारे ना तुरङ्गमे ।
पर्यस्तिका परिकरे विटे पल्लवको मतः ॥
प्रसूतिका तु सूतायां ककुभे तु प्रसेवकः ।
प्रत्यनीकस्त्वरातौ स्याल्लताभेदे पटोलिका ॥
प्रयाणकं स्यात्प्रस्थाने क्षुद्रारामे प्रसीदिका ।
प्रवाहिका संग्रहण्यां वमौ प्रच्छर्दिका मता ॥
प्रवल्हिकावत्कथिता कथायां च प्रहेलिका ।
टङ्कणे स्यात्पाचनकः प्राड्विवाकस्तु कीर्त्यते ॥
व्यवहारेष्वधिकृते पत्तौ पादातिको भवेत् ।
पाञ्चालिका [3]वस्त्रकृतपुत्रिकायां निगद्यते ॥

---

१ —ग्रन्थकः इत्युभयपु० पाठः ।
२ स्तु वङ्कोटे, इति क. ख. पु० पाठः ।
३ वस्त्रकृत, इति मा. पाठः ।

आगन्तौ स्यात्प्राघुणको[1] वृत्ते प्रामाणिकं[2] विदुः ।
प्रालम्बिका हारभेदेऽप्यथ सीवनसाधने ॥
सूचे पिप्पलकं प्राहुस्तथा वक्षोजवृन्तके ।
तगरे मदनाख्ये च तरौ पिण्डीतको मतः ॥
पिचण्डिका पिण्डिकाख्ये देहस्यावयवे भवेत् ।
अथ पुष्कलको गन्धमृगे क्षपणकीलयोः ॥
पुण्डरीकं सिताम्भोजे सितछत्रे च भेषजे ।
पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि च ॥
वर्द्धापके(ने) भवेत्पूर्णानकं च पटहे तथा ।
सारसे पुष्कराङ्कः स्यात्पृषदाज्ये पृषातकम् ॥
पृषातको देवभेदे [3]फर्फरीकस्त्वपेटके ।
फर्फरीकं मार्दवे स्या[4]त्तरुभेदे फणिज्झकः ॥
तपस्ये स्यात्फाल्गुनिको देशे जातौ च बर्बरे ।
बलाहको गिरौ मेघे दैत्यनागविशेषयोः ॥
बलान्तको महेन्द्रेऽथ वसन्ततौ बलाङ्गकः[5] ।
जम्बूफले बार्हतकं कलिद्रौ तु बिभीतकः ॥
कण्टकार्यां बृहतिका नृपे भट्टारको भवेत् ।
भयानको भवेद्व्याघ्रे रसे राहौ भयङ्करे ॥
भल्लातकस्तरुभिदि भृङ्गे भ्रमरकस्तथा ।
गैरिकेऽपि भ्रमरकस्तद्वत्स्याच्चूर्णकुन्तले ॥

---

१ ख. णिको । २ क. कीं । ३ क. पर्प ।
४ क. न्मरुधेहे । ५ क. न्धकः ।

भार्याटिकः पुमान् भार्यानिर्जिते च मृगान्तरे ।
भूरूढकं तु छत्राके तथा भृष्टामिषे मतम् ॥

भवेन्मरुवकः पुष्पभिच्छल्यद्रुफणिज्झके[1] ।
मण्डोदकं चित्तरागे भवेदातर्पणेऽपि च ॥

मतं मण्डलकं कुष्ठभेदे बिम्बे च दर्पणे ।
सस्यभेदे मर्कटकस्तथा वानरलूतयोः ॥

मयूरकस्त्वपामार्गे क्लीबं तुत्थाञ्जने मतम् ।
मधूलिका मधुश्रेण्यां जलजे तु मधूलकः ॥

मधुद्रुमेऽथ कथितो धान्यभेदे [2]मयुष्टकः ।
मङ्गल्यको [3]मसूरे स्यात् क्लीबे मङ्गलकर्मणि ॥

[4]मकुष्ठकस्तु मुद्गे स्यान्[5]मूर्वामुक्ता मधूलिका ।
भवेन्मधुरको जीवकाख्ये तु धरणीरुहे ॥

मकूलको निकुम्भेऽपि मृगतृष्णा मरीचिका ।
दध्याज्यमधुसंयोगे मधुपर्कमितीरितम् ॥

हारभेदे माणवको बाले कुपुरुषे बटौ ।
मध्वासवे माधवको [6]राधे मद्ये नपुंसकम् ॥

[7]मृष्टेरुको वदान्येऽपि मृष्टाशिन्यतिथिद्विषि ।
मेधाविको विदि ज्योतिषिके मौहूर्तिको मतः ॥

---

१ क. ज्जके । २ मकु, इति मा. पाठः । ३ ख. मयू ।
४ क. मधु । ५ ख. मधुपाकस्तु फाणिते । ६ ख. रान्धे ।
७ मिष्टेरको वदान्येऽपि मिश्रिन्यतिथिविद्विषि, इति मातृकापाठः ।

यवानीकाऽजमोदायां यायजूकस्तु याजके।
स्याद्याञ्चयाऽऽप्ते[1] याचितकं युवतीनां तु संहतौ॥
भवेद्यौवतकं चाथ दिवसे स्याद्रतद्विकम्।
सुखस्नाने[2] मङ्गले च, राजन्यकमुदीरितम्॥
राज्ञां सङ्घे राधरङ्कुर्भवेत्सीरे च शीकरे।
घनोपले रैवतको गिरौ रोहितकस्तरौ॥
ललाटिका पत्रपाश्या मालाभेदे ललन्तिका।
ललामकं विभूषायां मूले लामज्जकं विदुः॥
लालाटिकः प्रभोर्भावदर्शिन्याश्लेषणान्तरे।
कार्याक्षमे च गदितस्त्वथ लाक्षणिकः पुनः॥
सामुद्रिकज्ञेऽग्निशिखातरौ लाङ्गलिकी मता।
भवेल्लावणिकं सर्वं यद्यल्लवणसंस्कृतम्॥
लेखहारे लेखनिको यः स्वहस्तेन वा लिखेत्।
लेखेषु परहस्तेन, चक्रवाले तु पर्वते॥
लोकालोको लोहितकः पद्मरागमणौ मतः।
वक्रोष्ठिका च हसने स्मृतं चोचे वराङ्गकम्॥
वर्त्तरूकः काकनीडे नदीभेदे जलावटे।
वनीपको याचनके यानपात्रे वहित्रकम्॥
आम्रातके वर्षपाकी पञ्चाङ्गुले व्यडम्बकः।
वरारकं वज्रमणौ रज्जौ तु स्याद्वराटकः॥
वराटकः पद्मबीजकोशे चापि कपर्दके।
वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके॥

---

१ चितके, इति मा. पाठः। २ व्रत, इत्यस्यादिः।

वरण्डको वर्तुले च गदितस्तत्त्ववेदिभिः।
वडवाग्नौ वाणिजको[१] विदितश्च वणिज्यपि॥
वासन्तिका लताभेदे भारयष्टौ विहङ्गिका।
वृद्ध्याजीवे वार्धुषिको वावदूकस्तु वाग्मिनि॥
वाद्यालकस्तु घण्टादौ वागुरिकस्तु[२] जालिके।
विनायकस्तु गरुडे जिनभेदे गुरावपि॥
विनायकापि रण्डायां हेरम्बे तु विनायकः।
विकूणिका स्यान्नासायां वैणिके तु विकूणिकः (?)॥
[३]वितुन्नकस्तु धान्याके [४]झाटामलमयूरके।
वितुन्नकं हेमतारे तिलके स्याद्विशेषकम्॥
नेतर्यैकार्थसम्बन्धे[५] प्राहुः श्लोकचयेऽपि तत्।
विछन्दकः [६]प्रभेदेषु निन्दके तु विदूषकः॥
[७]विषान्तकः स्मरहरे हरिताले विडालकम्।
विकर्णिको देशभेदे पादस्फोटे विपादिका॥
विरूढकं तु छत्राके कूपके तु विदारकः।
विप्रश्नकस्तु दैवज्ञे पामायां स्याद्विचर्चिका॥
वृन्दारकः स्यादमरे वृषभाङ्को महेश्वरे।
[८]वैदेहकस्तु शूद्रायां वैश्येनोत्पन्नसन्ततौ॥
वैतालिको बोधकरे पटौ वैज्ञानिको मतः।
वार्तावहे[९] वैवधिको भवेद्वैमानिकोऽमरे॥

---

१ क. जिको। २ क. रीकस्तु। ३ क. वितुणिकं तु।
४ क. सटामाला। ५ ख. द्धे। ६ ईश्वरसद्मनामित्यस्यादिः।
७ ख. विशान्त। ८ शूद्राद्वैश्यायामुत्पन्नो वैश्याद्ब्राह्मण्यामुत्पन्नो वा वैदेहक इति कोशान्तरे। ९ हरे इति मा. पाठः।

मणिकारे वैकटिको भृत्ये वैतनिको मतः ।
वैरङ्गिको विरागार्हे शास्त्रे वैशेषिकं भवेत् ॥
[1]आस्फोटन्यां [2]वेधनिका वैतंसिकस्तु सौनिके ।
वैहासिको हास्यजीवे भवेद्वैनयिको रथे ॥
वैनाशिकः स्यात्क्षणिकपरतन्त्रोर्णनाभयोः ।
शतानीको भवेद्वृद्धे राजभेदे तथा मुनौ ॥
क्षुद्रशङ्खे शङ्खनकः शरलक्ष्ये शरव्यकम् ।
शालावृकः सृगाले स्यात्सारमेये बलीमुखे ॥
शाकुनिको वागुरिके नभः श्रावणिको मतः ।
शिखण्डिकः काकपक्षे भवेदपि शिखण्डकः ॥
शिवानकं पितृवने[3] वदन्ति विबुधा जनाः ।
श्रीवृक्षकमिति प्राहुरावर्तं हयवक्षसि ॥
श्रीपर्णिका तु कुम्भ्यां स्याच्छृङ्गाटकं चतुष्पथे ।
शृङ्गाटकं तथा वारिकण्टके च निगद्यते ॥
सृगालिका शिवायां स्यात् त्रासादपि पलायने ।
शेफालिका तु [4]निर्गुण्ड्यां शेलौ श्लेष्मातकं विदुः ॥
सन्तानिका तु क्षीरादिसारमर्कटजालयोः ।
[5]सतीनकः कलाये स्याद्भवेत्संकुसुकोऽस्थिरे ॥
संवर्तिका नवदले त्वौर्वे संवर्तको मतः ।
प्रलयेऽपि भवेत्क्लीबं बलरामायुधे मतम् ॥

---

१ ख. अ ।　　२ वै, इति मा. ।　　३ क. धने ।
४ ख. निर्ग ।　　५ सन्ता इति मा. ।

संवाहकस्त्वङ्गमर्दे[१] दूत्यां सञ्चारिका मता ।
सञ्चारिका च कुट्टिन्यां [२]घ्राणेऽपि युगलेऽपि च ॥
समुद्गकः सम्पुटके वरदे तु समर्धकः ।
सङ्घाटिका[३] तु कुट्टिन्यां युग्मे च जलकण्टके ॥
सङ्कुट्टकः सन्धिकरे तरुभेदे समष्ठिका ।
सन्दंशको लोहयन्त्रे तथा सन्दंशिका मता ॥
स्वाभाविकं स्यात्सहजे सभ्ये सामाजिकः स्मृतः ।
सांयात्रिकः पोतवणिग् दुःखे सांसारिकं मतम् ॥
सापलिका[४] स्यादध्यूढोद्वाहे साम्बन्धिकं विदुः ।
रसनायां सारसिकं [५]स्वर्जिक्षारे सुवर्चिका ॥
सुप्रतीकः शोभनाङ्गे मतश्चेशानदिग्गजे ।
सुगन्धिको महाशालौ वस्त्रभेदे सुचेलकः ॥
सुरूहको गर्दभाभहये हेम्नि सुवर्णकम् ।
सुषेणिका स्यात् त्रिवृति पित्तले तु सुलोहकम् ॥
सुपार्श्वकस्तरुभिदि सुरलोकस्त्रिविष्टपे ।
भक्ष्यकारे स्वेदनिकः क्लीबे स्वेदार्थकौषधे ॥
भवेत्सैकतिकं [६]मातृयाचामङ्गलसूत्रयोः ।
त्रिषु[७] संन्यस्तसन्देहजीविक्षपणकेष्वपि ॥
सैद्धान्तिकः प्राश्निके स्यात्सोमवल्कस्तु कट्फले ।
तथैव श्वेतखदिरे सोमवल्क इतीरितः ॥

---

१ ख. दे । २ ख. म्रा । ३ ङ्घट्टिका, इति मा. ।
४ लिका इति मा. । ५ सर्जे, इति मा. । ६ ख. मातृपाश्व ।
७ तथा इति मा. ।

सौगन्धिकं तु कल्हारे पद्मरागे च कत्तृणे ।
सुगन्धव्यवहारज्ञे [1]गन्धके स्यात्तु पुंस्यपि ॥
[2]सौराष्ट्रिका तुवर्यां स्याद्विषभेदे तु पुंस्यपि ।
सौवस्तिकः पुरोधाः स्याद् हव्यपाकश्चरौ मतः ॥
हसन्तिकाऽङ्गारधान्यामभयायां हरीतकी ।
हल्लीसकं तु स्त्रीनृत्ये [3]यन्ता हस्तिपकः स्मृतः ॥
स्यात्क्षुद्रघण्टिका क्षुद्रधान्यघोरापगान्तरे(?) ।

॥ इति कचतुर्थम् ॥

---

॥ अथ कपञ्चमम् ॥

अनेडमूकः कथितः शठे वाक्श्रुतिवर्जिते ।
क्रकचेऽसिपचकं स्याद्वन्दारावभिवादकः ॥
अवसक्थिका परिकरे छुरिका त्वसिपुत्रिका ।
द्रष्टरि व्यवहाराणां कथयन्त्यक्षदर्शकम् ॥
लुब्धेऽभिलाषुकं प्राहुर्जाबाले त्वजजीविकः[4] ।
[5]हसन्त्यामग्निकार्ये च निगदन्त्यग्निकारिकाम् ॥
अहंपूर्वमहंपूर्वमित्यहंपूर्विकां विदुः ।
तोययन्त्रेऽरघट्टकः पादावर्ते च कीर्तितः ॥

---

१ हरिताले तु मा. पाठः ।   २ ख. पु. नाय पाठः ।
३ ख. पु. तालवृकोऽश्वविक्रयी, इति पाठभेदः ।   ४ ख. कं ।
५ हसन्त्यामङ्गारधानिका इत्यमरः ।

वासकाख्यौषधभिदि प्रवदन्त्याटरूषकम् ।
गर्भागारेऽपवरकः खड्गिके त्वसिधारकः ॥
स्यादन्तर्वेशिकश्चावरोधिकोऽन्तःपुराश्रिते ।
कुटुम्बपोषणव्यग्रे त्वभ्यागारिक ईरितः ॥
आनुमानिक इत्याहुस्तार्किके नरि तद्विदः ।
अयःशूलिक इत्युक्तः क्रूरकर्मरते नरि ॥
कान्तार्थिनीं तु वनितां कथयन्त्यभिसारिकाम् ।
मुक्तास्फोटेऽब्धिमण्डूकी रथद्रावर्तिमुक्तकः ॥
अतिसारयुते पुंसि कथितस्त्वतिसारकी ।
स्यादम्ललोणिकाऽम्बष्ठा छुर्यां स्यादसिधेनुका ॥
तथासिपुत्रिका हट्टाध्यक्षे स्यादधिकर्मिकः ।
अन्नकोष्ठकमित्याहुर्धान्यागारे कुसूलके ॥
शस्त्रसंमार्जनकरे त्वसिधावक इत्यपि ।
पादादीनां[1] परिकरे प्रवदन्त्यवसक्थिकाम् ॥
नासानुगतवर्णेषु प्रवदन्त्यनुनासिकान् ।
[2]अजगन्धाऽभिधामाहुर्बर्बर्यां शाब्दिकोत्तमाः ॥
स्यादाच्छुरितकं हासनखराघातभेदयोः ।
गजाजीवे तु गदितः शाब्दिकैरिभपालकः ॥
[3]इन्द्रलुप्तकमित्याहुः खल्वाटे खलु तद्विदः ।
उग्रनासिक उन्नासे तृष्णायामपलासिका ॥

---

१ ख. दिना । २ कपञ्चमप्रकरणादजगन्धिकामिति न्याय्यम् ।
३ रुंझलुप्तकं, इति मातृकायामपपाठः ।

ऊर्ध्ववाससि सर्वेच कथयन्त्युत्तरीयकम् ।
स्यादुरःसूचिका मुक्तामालायामुपहालकः ॥
कुन्तलानां प्रदेशे स्यादूर्ध्वज्ञावूर्ध्वजानुकः ।
स्यादुलूखलकं क्लीवे गुग्गुलावुपकारिका ॥
उपकार्य्यां पिष्टभेदे तथैव स्यान्नृपालये ।
[1]उष्णोदकं वारिभेदे विदार्यामृक्षगन्धिका ॥
हारे स्यादेकयष्टिका वालुके त्वेलवालुकम् ।
चोरे त्वैकागारिकः स्यान्मण्डले तूपसूर्यकम् ॥
मतोपकुञ्चिका [2]तुत्था बन्धके त्वौपरोधिकः ।
कक्षावेक्षक इत्युक्तः शुद्धान्तोद्यानपालयोः ॥
रङ्गाजीवे कवौ[3] षिङ्गे द्वाःस्थे च कटखादकः ।
खादके काचकलशे बलिपुष्टे च जम्बुके ॥
राजर्षिभेदे च तथा पूतिके कलिमारकः ।
द्विपार्भके समुद्दिष्टः करिशावक इत्ययम् ॥
[4]कथयन्ति विदर्भेषु विद्वांसः क्रथकैशिकम् ।
काकतिन्दुक इत्युक्तः काकपीलुकवृक्षके[5] ॥
यथा वृहत्यां कथिता शब्दज्ञैः कण्टकारिका ।
तथैव चिश्चति प्राहुः पण्डिताः कालमेषिकाम् ॥
काकजङ्घातरौ काकनासिकेति निगद्यते ।
उदुम्बरे विडङ्गे च क्रमिकण्टकमीरितम् ॥

---

१ उष्णोदकमिति कपञ्चमेऽयुक्तम् । २ ख. तृष्णा ।
३ रवौ, इति मा. । ४ ख. अधिकः पाठः । ५ ख. रक्तके ।

वदन्ति च समुद्योगे कोशेषु कियदेतिकाम् ।
कुलबालिका कुलस्त्री सैव स्यात् कुलपालिका ॥
कुटहारिका भुजिष्या चुक्रे तु कुण्डगोलकं कथितम् ।
पत्न्यास्त्ववरजातायामपि स्यात्केलिकुञ्चिका ॥
कोरदूषक इत्युक्तः सस्यभेदे कियत्यपि ।
द्वैपायनस्य जननी प्रसिद्धा गन्धकालिका ॥
स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ।
गणिकारिकाऽग्निमन्थे लम्बिका गलशुण्डिका ॥
कुटजे गिरिमल्लिका कूपके गुणवृक्षकः ।
मुसल्यां गृहगोधिका गोजागरिकमित्ययम् ॥
मङ्गले कण्टकारे नाप्यथ स्याद्घनगोलकः ।
सुवर्णरूप्ययोर्मिश्रीभावेन परिवर्तने ॥
चन्द्रिकायां यथा प्राहुः शाब्दिकाश्चन्द्रगोलिकाम् ।
दद्रुघ्ने च तथा वृक्षे चक्रमर्दकमूचिरे ॥
चक्रजीवक इत्युक्तः कुलाले चक्रजीविकः ।
लेखके स्याच्च चित्रज्ञे चित्रजीवक इत्यपि ॥
सौदामिन्यां च खद्योते गदिता चिलिमीलिका ।
अथो जलकरङ्कः स्यान्नालिकेरफलेऽपि च ॥
शङ्खे जललतायां च वारिवाहे च कीर्त्यते ।
काकोलीराजशफरमत्स्ययोर्जलतापिकः ॥
जलवारकोऽथ सेतौ हरिरेव जगन्नायकस्त्वेकः ।
जगताञ्जनको ब्रह्मा जङ्घाकरिकस्तु जङ्घाले ॥

लौहजालमये अङ्गरक्षणसाधने वर्म्मभेदे अङ्गरक्षणसाधनमात्रे त्रि० । भावे ल्युट् । देहत्राणे न० ।

**अङ्गराग** पु० अङ्गं रज्यतेऽनेन रन्ज–करणे घञ् । अङ्गलेपने कुङ्कुमादौ । भावे घञ् । अङ्गस्य विलेपने पु० ।

**अङ्गराज** पु० अङ्गानां जनपदानां राजा अच् समा० । अङ्गदेशाधिपे, कर्णे च तत्कथा अङ्गाधिपशब्दे दृश्या । अङ्गन्दपादयोऽप्यत्र ।

**अङ्गराज्** पु० अङ्गेषु तन्नामकदेशेषु राजते राज–क्विप् ७त० । अङ्गदेशाधिपे कर्णे, तद्देशराजमात्रे च ।

**अङ्गरुह** न० अङ्गे रोहति रुह–क्विप् ७त० । देहजे लोमकेशादौ । "विहङ्गराजाङ्गरुहैरिवायतैरिति" माघः ।

**अङ्गलेप** पु० अङ्गं लिप्यतेऽनेन लिप–करणे घञ् ६त० । अङ्गरागद्रव्ये । भावे घञ् ७त० । देहे चन्दनाद्यनुलेपने ।

**अङ्गव** न० अङ्गे स्वावयवे वाति अन्तर्भवति अतिशोषणात् सङ्कुचिताङ्गमिव भवति वा–ड ७त० । शुष्कफले ।

**अङ्गविकल** त्रि० अङ्गेन विकलः । देहव्याकुलतायुक्ते ।

**अङ्गविकृति** पु० वि–कृ–क्तिन् अङ्गस्य विकृतिश्चालनादिर्यस्मात् ५त० । (म्हगीनाडा) इति ख्याते अपस्माररोगे । ६त० । अङ्गस्य विकारे स्त्री ।

**अङ्गविक्षेप** पु० वि–क्षिप–घञ् अङ्गस्य विक्षेपः चालनं यत्र ब० । अङ्गुल्यादिविन्यासभेदेन देहचालनरूपे नृत्ये । तद्भेदादि यथा । "देहरुच्या प्रतीतो यस्तालमानसमाश्रयः । सविलासोऽङ्गविक्षेपो नृत्यमित्यभिधीयते । ताण्डवञ्च तथा लास्यं द्विविधं नृत्यमुच्यते । पेवलिबहुरूपञ्च ताण्डवं द्विविधं मतम् । अङ्गविक्षेपबाहुल्यं तथाभिनयशून्यता । यत्र सा पेवलिस्तस्या देशीति नाम लोकतः । छेदनं भेदनं यत्र बहुरूपा सुखावली । ताण्डवं बहुरूपन्तत् दारुणात् गलमूर्द्धतः । छुरितं यौवतञ्चेति लास्यं द्विविधमुच्यते । यत्राभिनयभावाद्ये रसैराश्लेषचुम्बनैः । नायिकानायकौ रङ्गे नृत्यतस्च्छुरितं हि तत् । मधुरं बहुलीलाभिर्नर्त्तकीभिर्यत्र नृत्यते वशीकरणविद्याभं तल्लास्यं यौवतं मतम् । गेयाद्दुत्तिष्ठते ध्वाद्यं वाद्यादुत्तिष्ठते लयः । लयतालसमारब्धं ततो नृत्यं प्रवर्त्तते" इति सङ्गीतदामोदरः । भावे घञ् । अङ्गचालने ।

**अङ्गविद्या** स्त्री अङ्गरूपा व्याकरणादिशास्त्ररूपा विद्या ज्ञानसाधनम् । ज्ञानसम्पादके व्याकरणादिशास्त्रे । प्रश्नकाले अङ्गानां देहावयवानां चेष्टादिना शुभाशुभबोधके ज्योतिरङ्गे शास्त्रे च । सा च विद्या वृहत्संहितायां दर्शिता यथा "अथाङ्गान्यूर्वोष्ठस्तनवृषणपादं च दशना भुजौ हस्तौ गण्डौ कचगलनखाङ्गुष्ठमपि यत् । समाङ्कं कक्षांसश्रवणगुदसन्धीति पुरुषे, स्त्रियां भ्रूनासास्फिग्वलिकटिसुलेखाङ्गुलिचयम् ॥ जिह्वा ग्रीवा पिण्डिके पार्ष्णियुग्मं जङ्घे नाभिः कर्णपाली कृकाटी । वक्त्रं पृष्ठं जत्रुजान्वस्थिपार्श्वं हृत्तालुन्यौ मेहनोरस्त्रिकं च ॥ नपुंसकाख्यं च शिरो ललाटम् आस्वाद्यसंज्ञैः परैश्चिरेण । सिद्धिर्भवेज्ज्ञातु नपुंसकैर्नो कृतान्तभग्नकृतैश्च पूर्वैः ॥ स्पृष्टे वा चालिते वापि पादाङ्गुष्ठेऽक्षिरुग् भवेत् । अङ्गुल्यां दुहितुः शोकं शिरोघस्रे नृपाद्भयम् ॥ विप्रयोगमुरसि स्वगात्रतः [illegible]टाहृतिरनर्थदा भवेत् । स्यात्प्रियाभिरभिवाञ्छ्य कपर्दे पृच्छतश्चरणपादयोजितः ॥ पादाङ्गुष्ठेन विलिखेद्भूमिं क्षेत्रोत्थचिन्तया । हस्तेन पादौ कण्डूयेत्तस्य दासीमया च सा ॥ तालभूर्जपटदर्शनेऽंशुकं चिन्तयेत्कपतुपास्थिभङ्गम् । व्याधिराश्रयति रज्जुजालकं वल्कलं च समवेक्ष्य बन्धनम् ॥ पिप्पलीमरिचशुण्ठिवारिदैर्लोध्रकुष्ठवसनाम्बुजीरकैः । गन्धमांसिशतपुष्पया वदेत् पृच्छतस्तगरकेण चिन्तनम् । स्त्रीपुरुषदोषपीडितसर्वाध्वसुताधनाश्रितानाम् । द्विचतुःषट्पदगतीनां विनाशतः कीर्तितैर्दृष्टैः ॥ न्यग्रोधमधूकतिन्दुकजम्बूप्लक्षाम्रबदरिजातिफलैः । धनकनकपुरुषलोहांशुकरूप्योदुम्बरोर्धिरपि करगैः ॥ धान्यपरिपूर्णपात्रं कुम्भः पूर्णः कुटुम्बवृद्धिकरौ । गजगोशुनां पुरीषं धनयुवतिसुहृद्विनाशकरम् ॥ पशुहस्तिमहिषपङ्कजरजतव्याघ्रैर्लभेत सन्दृष्टैः । अविधनाविकनमकराज कौशेयाभरणसङ्घातम् ॥ पृष्ट्वा वृद्धश्रावकमुपरिव्राड् दर्शने नृभिर्विहिता । मित्रद्युतार्थभया गणिकानृपप्रकृतिकार्थकृता ॥ शाक्योपाध्यायार्हतनिर्ग्रन्थिनिमित्तनिगमकैवर्त्तैः । चौरचमूपतिवणिजां दासयोधापणस्थवध्यानाम् ॥ तापसे शौण्डिके दृष्टे प्रोषितः पशुपालनम् । वृत्तं पृच्छकस्य स्यादुञ्छवृत्तौ विपन्नता ॥ इच्छामि प्रष्टुं भण पश्यत्वार्यः समादिशेत्युक्ते । संयोगकुटुम्बोत्था लाभैश्वर्योकृता चिन्ता ॥ शिर्दिशेति गदिते जयाध्वगा, प्रत्यवेक्ष्य मम चिन्तितं वद । आशु सर्वजनमध्यगं त्वया दृश्यतामिति च बन्धुचौरजा ॥ अन्तःस्थेऽङ्गे स्वजनउदितो बाह्यजे बाह्य एवं पादाङ्गुष्ठाङ्गुलिकलनया दासदासीजनः स्यात् । जङ्घे प्रेष्यो भवति भगिनी नाभितो हृत्स्वभार्या पाणयङ्गुष्ठाङ्गुलिचयकृतस्पर्शने

प्रतिरोधकश्च चौरे परिपन्थिनि मार्गदूषके गदितः ।
परिव्राजको मस्करिणि कथितोऽपि बौद्धतापसयोः ॥

प्रतिसूर्यकश्च कथितः कृकलासे विदां श्रेष्ठैः ।
पारियात्रिकोऽध्वरथे कथितश्च पारिरक्षकोऽथ यतौ ॥

पारिभद्रकोऽद्रि(द्रु !)भेदे पार्श्वस्थे पारिपार्श्वको गदितः ।
पारियात्रक[1]स्तथाऽद्रौ क्वापि च पारिजातको द्रुभिदि ॥

पारश्वधिकः परश्वायुधधारिणि समुद्दिष्टः ।
पारि[2]पन्थकोऽपि चौरे प्रातिहारिकोऽथ मायाज्ञे ॥

पीतसारकस्तु सर्जे पिनाकधृक् स्मरान्तके प्रथितः ।
पुच्छकण्टकस्तथालौ भक्ष्ये क्वापि च पूलिपूपिकामाहुः ॥

बलिवाह्यकश्च शकटे बन्धुजीवकस्तु बन्धुजीवतरौ ।
बीजपुष्पिकान्यतरौ श्लेष्माते बाहुवारकः कथितः ॥

भर्तृदारिकामथाहुर्नाट्योक्तौ राजकन्यकायां च ।
भर्तृदारकस्तथोक्तस्तत्रैव च युवराजेऽपि ॥

भ्रमरालकस्तु कुरुले त्रिलोचने भूतनायकं प्राहुः ।
पूर्वं भूते क्वापि च कथयन्ति भूतपूर्वकं सन्तः ॥

मधुजीवको मधुलिहि मस्तुलुङ्को मस्तकस्नेहे ।
मधुपर्णिका तरुभिदि गणामरे महाराजिकं प्राहुः ॥

मृगधूर्तकः सृगाले मृगजालिका वागुरायां च ।
यज्ञकीलकोऽथ यूपे दैत्ये भर्गे च यज्ञदूषको गदितः ॥

---

१ क. तक । २ ख. बन्धि ।

यूपकटकश्चषाले युगपत्रकस्तु कोविदारतरौ।
रणरणकस्त्वौत्सुक्ये कर्णीरथे रथगर्भकं प्राहुः॥
मनःशिलायामपि च वदन्ति रसनेचिकाम्।
अपामार्गे तु गदितो विद्वद्भिर्लोचमस्तकः॥
लोकायतिकमप्याहुश्चार्वाके लोहकुट्टकः।
लोहकारे निगदितः स्वर्णकारेऽपि च क्वचित्॥
स्याद्व्यवहारिका लोकयाचासम्मार्जनीङ्गुदे।
तथा निगदिता लोके लेखिन्यां वर्णतूलिका॥
वृत्ते भाविनि वा युद्धे यत्पानं वीरपाणकम्।
हरिताले स्मृतं वंशपत्रकं वृषनाशकः(?)॥
[1]शिरीषवृक्षे गदितो विद्वद्भिर्वैजयन्तिकः।
पताकिन्यथ दूर्वायां वचायां शतपर्विका॥
शीतचम्पक इत्येव स्यादातपर्णदीपयोः।
सुवसन्तक आख्यातो वासन्त्यां मदनोत्सवे॥
स्याद्धेमपुष्पिका यूथ्यां चम्पके हेमपुष्पकः।
क्षुद्रनासिकमप्याहुर्नःक्षुद्रे शब्दवेदिनः॥

॥ इति कपञ्चमम्॥

---

अथ कषष्ठम्।

अहमहमिकामाहुरहङ्कारेऽथ लेखके।
शब्दशास्त्रपरिष्णाते वदन्त्यक्षरजीवकम्॥

---

१ क. सि।

दर्पादात्मप्रशंसायामाहोपुरुषिकां विदुः।
आभीरपल्लिका घोषे त्वाग्रहायणिकः सहे[1] ॥

चर्मपात्रे तु करकपात्रिकाऽथ निगद्यते।
क्रयविक्रयिको वैश्ये काकोदुम्बरिका तरौ ॥

मलघ्नां च तथैवोक्ता काकोदुम्बरिका जनैः।
कपोतपालिकामाहुर्विटङ्के शब्दवेदिनः ॥

कृतसापत्निकाऽध्यूढा कृतान्तजनको रविः।
स्थानात्स्थानान्तरं [2]गच्छद्रूपे गन्धपिशाचिका ॥

गन्धर्वहस्तकः प्रोक्तस्तथैवैरण्डपादपे।
ग्राममद्गुरिका ग्रामयुद्धे शृङ्गिभषेऽपि च ॥

चर्मप्रभेदिकाऽऽरायां भस्त्रा चर्मप्रसेविका।
तरौ रोहितकाख्ये तु मतो दाडिमपुष्पकः ॥

नक्षत्रसूचको ज्योतिःशास्त्रवेदिनि कीर्त्तितः।
प्रख्यातवक्तृको विज्ञे टङ्के पाषाणदारकः[3] ॥

पाषाणभेदकं प्राहुः शब्दज्ञाश्चौषधान्तरे।
बहुगर्ह्यवाग्वाचाटे, शैलूषेऽथ निगद्यते ॥

विद्वद्भिः शब्दशास्त्रज्ञैरयं भरतपुत्रकः।
मार्जारकर्णिका देव्यां सूते मङ्गलपाठकः ॥

स्मृता तु नर्मदाख्यायां नद्यां मेकलकन्यका।
रङ्गाजीविनि रङ्गावतारकः परिकीर्तितः ॥

---

१ क. (हाः)।   २ क.। (गन्त)   ३ भेदक इति मा. पा.।

रथकुटुम्बिकः क्षत्ता रणे वीरजयन्तिका ।
वीरविप्रावकः शूद्रधनैर्याजक उच्यते ॥
विज्ञानमातृको बौद्धे मतो, विरलजानुकः ।
ऊर्ध्वज्ञावथ निर्दिष्टो विप्रैर्वर्णविलोडकः[1] ॥
श्लोकस्तेने च चौरे च, सिन्दूरतिलकः पुनः ।
मतङ्गजे स्त्री कामिन्यां, दूते सन्देशहारकः ॥
[2]सौखशायनिकं प्राहुर्नरि सुस्वप्नपृच्छके ।

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये कान्तवर्गः ॥

---

अथ खान्तवर्गः ।

खमिन्द्रिये व्योम्नि पुरे शर्मणि त्रिदशालये ।
क्षेत्रे संवेदने बिन्दौ शून्येऽपि च निगद्यते ॥

अथ खद्वितीयम् ।

आखुः स्यान्मूषके[3] तूखा क्षणवध्वां निगद्यते ।
[4]नखः कररुहे शङ्के शुक्तौ स्त्रीक्लीबयोर्नखी[5] ॥
नपुंसकं तु नखरे गन्धद्रव्येऽपि कुत्रचित् ।
[6]न्युङ्खः सम्यङ्मनोज्ञे च साम्नः षट्प्रणवेषु च ॥
पुङ्खस्तु शरमूले स्यात्प्रेङ्खा पर्यटनेऽपि च ।
नृत्ये भवेदश्वगतावपि संवेशनान्तरे ॥

---

१ ख. (जकः) ।  २ ख. पुस्तकपाठः ।  ३ क. ख. खनके ।
४ "नखः केतुग्रहे प्रागुक्ते" इति मा. पाठः ।
५ नखं चेति शेषः ।  ६ न्युङ्खाः षोडश ओङ्कारा इत्यपि क्वचित् ।

मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि।
सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्॥
मूर्खो मूढे मखो यज्ञे लेखो लेख्ये सुरेऽपि च।
तथैव विदितः सद्भिर्लेखो वाचिकहारके॥
मर्यादायां भवेल्लेखा लिपिराजिकयोरपि।
विङ्खो गतिविशेषे[१] च शूकशिम्ब्यां च नर्तने॥
शङ्खो निध्यन्तरे कम्बुललाटास्थिनखेष्वपि[२]।
शङ्खी हरौ समुद्रे ना शङ्खवत्यभिधेयवत्॥
शाखी स्यात्पादपे पुंसि तद्वद्विप्रजने मतः।
शाखा वेदविभागे च पादपाङ्गेऽन्तिकेऽपि च॥
शिखा शिखायां[३] चूडायां ज्वालायामग्रमात्रके।
लाङ्गलिक्यां च शाखायां चूडायां च शिखण्डिनः॥
शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे।
मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गवत्॥
सखा सहाये मित्रे च वयस्यायां सखी मता।
सुखं शर्मणि नाके च सुखा पुर्यां प्रचेतसः॥

॥ इति खद्वितीयम्॥

---

१ अश्वस्येति शेषः।

२ ख. पु० गलेसितामेखरेखां बिभ्राणे तावपि स्मृतः। अधिकः पाठः।

३ क. (०पायां)।

अथ खटतीयम् ।

अमुखस्तु भवेन्मूके[1] त्वामुखं [2]सम्मुखे मतम् ।
उन्मुखस्तूर्ध्ववक्त्रे स्यादुत्कण्ठाव्याकुलेऽपि च ॥

गोमुखं कुटिलागारे वाद्यभेदे च लेपने ।
[3]गणभेदे महेशस्य तथा मातलिपुत्रके ॥

त्रिशिखं तु त्रिशूले स्याच्छिखरे राक्षसे पुमान् ।
[4]त्रिमुखं तु मतं शूले त्रिमुखो राक्षसान्तरे ॥

दुर्मुखो नागभेदेऽपि मुखरे वानराश्वयोः
प्रमुखः प्रथमे श्रेष्ठे परिखा सालवेष्टने ॥

[5]मयूखः किरणे ज्वालाशोभयोर्विशिखः पुनः
शिलीमुखे तोमरे च, विशिखा तु निगद्यते ॥

खनित्र्यामपि रथ्यायां नलिकायामपि क्वचित् ।
वाङ्मुखं स्यादुपोद्घाते विमुखस्तु पराङ्मुखे ॥

विशाखस्तक्ष(र्क?)के स्कन्द ऋक्षभेदे कटिल्लके ।
मन्थाने मासभेदेऽपि वैशाखः परिकीर्तितः ॥

षण्मुखस्तु विशाखे स्यात्सुमुखो वावदूकके ।
सुमुखः स्यात्तार्क्ष्यपुत्रे फणिभेदे च पण्डिते ॥

---

१ ख. (खें) । २ क. (सन्मु) ।
३ पुंसीत्यस्यादिः । ४ अयं पाठो मा. खचतुर्थे आसीत् ।
५ ख. पु० मयूखः किरणे ज्वालाशोभयोर्वाङ्मुखं पुनः ।
उपोद्घातेऽथ विशिखस्तोमरे मार्गणेऽपि च ।
विशिखा तु खनित्र्यां च रथ्यानालिकयोरपि । इति पाठभेदः

[1]हृल्लेखः स्यादुत्कलिका मन्त्रबीजाक्षरे क्वचित् ।
हृल्लेखं तु भवेत्क्लीबेऽलक्ष्यवस्तुनि सर्वशः ॥

॥ इति खतृतीयम् ॥

---

अथ खचतुर्थम् ।

अहर्मुखं प्रभाते स्यादवलेखो वमावपि ।
भवेदग्निमुखो देवे विप्रे भल्लातकेऽपि च ॥
अथाग्निमुखमुद्दिष्टं कुसुम्भे [2]कुङ्कुमेऽपि च ।
लाङ्गलिक्यां विशल्यायामोषधौ तु स्त्रियां विदुः ॥
कुङ्कुमे स्यादग्निशिखं हस्ते त्वग्रनखः स्मृतः ।
अयोमुखं तु मुसले हले बाणे त्वयोमुखः ॥
अपलेखो वृथालेखे वृक्षभेदे त्वधोमुखः ।
अधोमुखस्तु पिशुने ज्ञानिन्यन्तर्मुखस्तथा ॥
इन्दुलेखा चन्द्रकलासोमवल्ल्यमृतासु च ।
गणेशे स्यादिभमुखः स्त्रियामिन्दुमुखी मता ॥
कुबेरे स्यादीशसखः शृगाल्युल्कामुखी मता ।
कुहूमुखस्तु गदितः परपुष्टविहङ्गमे ॥
कुशले स्यात्कृतमुखो गजमुखो गणेश्वरे ।
देव्यां गृध्रमुखी क्वापि [3]देव्यां चन्द्रमुखी क्वचित् ॥

---

१ हृल्लेखोत्कलिकायां स्यादिति मा. पाठः ।

२ ख. (कुसु) । ३ ख. (तथा) ।

चतुर्मुखो वेधसि स्याद्देव्यां चारुमुखीत्यपि ।
चित्रपुङ्खः स्मृतो बाणे ध्वान्ते चोरमुखं मतम् ॥
[1]जगन्मुखौ हरिन्टपौ देव्यां ज्वालामुखीति च ।
कृष्णे जयसखः प्रोक्तः कपौ ताम्रमुखः स्मृतः ॥
त्रयीमुखो मखे विप्रेऽप्यमरे स्यात्त्रयीमुखः ।
दशमुखो रावणे स्यान्मतो दंष्ट्रामुखोऽप्यहौ ॥
चतुःशतग्राममध्ये पुरं द्रोणमुखं[2] मतम् ।
पार्वणे स्याद्दर्शमुखं जलौघे स्यान्नदीमुखम् ॥
तन्द्रां[3] नन्दीमुखीं प्राहुः नान्दीमुखाः पितृष्वपि ।
हरे[4] सिंहे पञ्चमुखः शशादिषु तु वै पुनः[5] ॥
मतः पञ्चनखः श्वाऽथ शिशौ बद्धशिखः स्मृतः ।
उच्चटायां बद्धशिखा[6] सुरे बर्हिर्मुखो मतः ॥
महाशङ्खो मानुषास्थिसङ्ख्याभेदालिकेष्वपि ।
लसन्मुखो [7]विहसिते तथा [8]लालामुखोऽप्यहौ ॥
अथ व्याघ्रनखं[9] गन्धद्रव्ये चाप्यौषधान्तरे ।
स्त्रियां, नखक्षते क्लीबं, कपौ वृद्धे वलीमुखः ॥
अथ वायुसखो वह्नावलिबाणौ शिलीमुखौ ।
नखक्षताङ्कुरे क्लीबे शिलीमुखमुदाहृतम् ॥

---

१ ख. पु० पाठाभावः । २ द्रोणीमुखं, इति मा. पाठः ।
३ क. (वड्रां) । ४ ख. (रौ) । ५ ख. (तथा गजे) ।
६ ख. (खः) । ७ ख. (विक) । ८ क. (ता) ।
९ क. ख. (खो) ।

निगद्यते स्वस्तिमुखो विप्रे[१] वाचिकहारिणि।
हसन्मुखस्तु सुभगे मतो हालामुखोऽप्यहौ॥

॥ इति खचतुर्थम् ॥

---

अथ खपञ्चमम्।

अबद्धमुखो[२] मुखरे तिग्ममयूखः स्मृतः सूर्ये।
धनदे त्र्यम्बकसखः पञ्चविशिखो मतः कामे॥

मलिनमुखस्तु वह्नौ गोलाङ्गूले तथा क्रूरे।
यामिनीमुखरजनीमुखौ शब्दावुक्तौ प्रदोषेऽपि॥

शीतमयूखश्चन्द्रे घनसारेऽपि वा पुंसि।
सर्वतोमुख उग्रे च क्षेत्रज्ञब्रह्मणोरपि॥
नपुंसकं तु पानीये [३]सुरवर्त्मन्यपि स्मृतम्।

॥ इति शब्दरत्नसमन्वये खान्तवर्गः॥

---

अथ गान्तवर्गः।

गौः स्वर्गे च बलीवर्दे कुलिशे किरणे पुमान्।
स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च॥

---

१ ख. दूते। २ ख. (न्ध) मुखो। ३ ख. (सुख)।

## अथ गद्वितीयम् ।

अगः क्ष्माभृत्पादपयोरङ्गं चान्तिकगात्रयोः ।
प्रतीकोपाययोः पुंसि भूम्नि नीवृति गद्यते ॥
क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चोच्यते ।
उक्तमङ्गेति सम्बुद्धौ राहावगुरुदाहृतः ॥
आगोऽपराधे त्विङ्गः स्यादिङ्गितज्ञानयोरपि ।
जङ्गमेऽपि क्वचिद्धान्ये कङ्गुरित्यभिधीयते ॥
खगो देवे ग्रहे सूर्ये तथा पक्षिणि मार्गणे ।
खङ्गो गण्डकशृङ्गासिबुद्धभेदेषु गद्यते ॥
खङ्गी ना गण्डके मञ्जुघोषे खङ्गधरेऽपि च ।
गङ्गा त्रिपथगायां स्याद्गाङ्ग[1]स्तत्प्रभवे त्रिषु ॥
भीष्मषण्मुखयोश्चापि गर्गो [2]मुन्यन्तरे मतः ।
[3]चङ्गस्तु शोभने दक्षे छागः स्यादपि बर्करे ॥
जुङ्गः स्याद्वृक्षगन्धायां[4] टङ्कोऽस्त्री स्यात्खनित्रके ।
जङ्घायां खङ्गभेदेऽपि त्यागो दाने [5]च वर्जने ॥
त्यागी दातरि शूरे च कथितः शब्दवेदिभिः ।
तुङ्गी निशाबर्बरयोः पुन्नागनगयोः पुमान् ॥
उन्नते त्वन्यवद्दुर्गोमानील्योस्त्रिषु दुर्गमे ।
नगो महीरुहे चाद्रौ, सूर्ये चक्षुःश्रवस्यपि ॥

---

१ क. (ङ्गं त) । २ ख. (मन्च) । ३ ख. (प्र) ।
४ जुङ्गस्तून्मादविहृते, इति मा. पाठः । ५ क. (ऽप) ।

नागः पन्नगमातङ्गक्रूरचारिषु तोयदे ।
नागकेसरपुन्नागनागदन्तकमुस्तके ॥

देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः ।
नागं तु सीसके रङ्गे [1]स्त्री बन्धकरणान्तरे ॥

नृगस्तु नृपभेदे स्यात्पङ्गुः पादविवर्जिते ।
पिङ्गा गोरोचनाहिङ्गु[2]नालिकाचण्डिकास्वपि ॥

पिङ्गी शम्यां पिशङ्गे ना [3]बालके तु नपुंसकम् ।
पूगस्तु क्रमुके वृन्दे पूगं क्रमुकजे फले ॥

फल्गुः स्त्रियां नदीभेदे फल्गवसारेऽभिधेयवत् ।
भङ्गो जयविपर्यासे भङ्गा सस्यान्तरे स्त्रियाम् ॥

भेदरोगतरङ्गेषु पुंसि, क्लीबे भगं मतम् ।
श्रियां च ज्ञानवैराग्यकीर्तीच्छासु पराक्रमे ॥

माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ[4] ।
भागो रूपार्धके प्रोक्तो भागधेयैकदेशयोः ॥

भृङ्गो मधुव्रते भृङ्गराजे धूम्याट[5]षिङ्गयोः ।
भृङ्गं गुडत्वचि क्लीबे, तथा पुंसि भृगुस्तटे ॥

मुनौ शुक्रे हरे भृङ्गी मतस्तु हरपार्षदे ।
भोगी त्वहौ भोगवति भोगः प्रोक्तः सुखे धने ॥

---

१ तथा स्त्री, इति मा. पाठः । २ क. ख. (नाडि) ।
३ क. ख. (रा) । ४ क. पु. एतदनन्तरं ज्ञानवैराग्ययोर्योनौ भगमस्त्री वसौ तु ना इत्यधिकः पाठः । ५ ख. (खि) ।

पालनेऽभ्यवहारेऽह्ने[1] शरीरफणयोरपि ।
योषिदादिभृतौ चापि मद्गुर्जलचरे क्वचित् ॥
मार्गः स्यात्पथि मासेऽपि तथैवान्वेषणेऽपि च ।
मार्गौ मृगमदेऽपि स्यान्मार्गौ तु पथिके स्मृतः ॥
मुद्गः शिम्बीधान्यभेदे मृगोऽपि पुरुषान्तरे ।
मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः ॥
अन्वेषणायां याञ्चायां मृगी तु वनितान्तरे ।
यागस्तु क्रतुमात्रेऽपि युगं हस्तचतुष्टये ॥
युगो रथे हलाद्यङ्गे न द्वयोस्तु कृतादिषु ।
युग्मेऽपि युगमित्युक्तं वृद्धिनामौषधेऽपि च ॥
योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु ।
वपुःस्थैर्ये प्रयोगे च विष्कम्भादिषु भेषजे ॥
विस्रब्धधातुके द्रव्योपायसन्नहनेष्वपि ।
कार्मणेऽपि च रङ्गो ना रागे नृत्ये रणक्षितौ ॥
अस्त्री त्रपुणि रागस्तु प्रोक्तो मात्सर्यभूपयोः ।
क्लेशादावनुरागे च गाने [2]लौहित्यकादिषु ॥
रिङ्गस्तु रिङ्गणे रोगः कुष्ठादावौषधान्तरे ।
स्यात्सङ्ग[3]षिङ्गयोर्लङ्गो लिङ्गं मेहनचिह्नयोः ॥
तथाऽनुमाने साङ्ख्योक्तौ प्रकृतावपि गद्यते ।
शिवमूर्तिविशेषे च लिङ्गी स्याल्लिङ्गधारिणि ॥

---

१ च, इति मा। २ ख. (लोहित)।
३ खिङ्ग, इति माट. पा.।

तुङ्गस्तरुभिदि प्रोक्तो व्यङ्गो हीनाङ्गभेकयोः ।
वङ्गः स्याद्देशभेदेऽपि वङ्गं[1] सीसकरङ्गयोः ॥

वार्ताकेऽपि च कार्पासे पुम्भूम्नि च निगद्यते ।
वल्गुः स्याच्छागले पुंसि सुन्दरे पक्षिणि क्वचित् ॥

वर्गस्तु ऋक्समूहे स्यात्स्वपक्षेऽपि निगद्यते ।
वेगो जवे प्रवाहे च महाकालफलेऽपि च ॥

शुङ्गो[2] वटाम्रातकयोः पर्कट्यामपि योषिति ।
शृङ्गं तु शिखरे चिह्ने [3]प्रभुत्वेहाम्बुयन्त्रके ॥

विषाणोत्कर्षयोश्चापि शृङ्गः स्यात्कूर्चशीर्षके ।
स्वर्णमीनप्रभेदे च शृङ्गी स्यादौषधान्तरे ॥

शृङ्गी शृङ्गयुते नागे तथा च शिखरिण्यपि ।
सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु ॥

भवेत्सङ्गस्तु संसर्गे प्रोक्तः स्वर्गस्त्रिविष्टपे ।
स्वर्गस्तु मारुते[4] स्वाङ्गं शुभाङ्गे वाच्यलिङ्गवत् ॥
हिङ्गु निर्यासभेदे स्यात्पादपे पुंसि कथ्यते ॥

॥ इति गद्वितीयम् ॥

---

॥ अथ गतृतीयम् ॥

अयोगो विधुरे कूटे विश्लेषे कठिनोद्यमे ।
अभ्रगः पक्षिणि शरे त्वद्रिगो गजसिंहयोः ॥

---

१ क. (ङ्गः)।
२ प्लङ्गी, इति मा. पा.।
३ प्रभु हेमाम्बु—इति मातृ. पा.।
४ स्वर्गो मरुति तु, इति मा. पा.।

अब्धिगः पोतवणिजि त्वनङ्गः पञ्चसायके ।
क्लीबे त्वनङ्गमाकाशेऽप्यधिगस्त्वनुजीविनि ॥
अनुगोऽपि भवेद्भृत्ये त्वजगो विष्णुयायिनि ।
अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च ॥
अरोगस्तु भवेत्स्वस्थे त्वश्रृङ्गस्तूबरे पशौ ।
अतुङ्गस्तु भवेत्खर्वेऽप्यर्थगो भृतिजीविनि ॥
आशुगो मारुते बाणे नदीमात्रे मताऽऽपगा ।
आभोगो वारुणे छत्रे पूर्णतायत्नयोरपि ॥
[1]आयोगो व्यापृतौ गन्धमाल्योपहाररोधसोः ।
उत्सर्गः पुंसि सामान्ये न्याये च त्यागदानयोः ॥
उद्वेगोऽप्युद्गाहुलकोद्वेजनोद्गमनेषु च ।
[2]फले पूगस्य चोद्वेगं क्लीबमाहुर्मनीषिणः ॥
उरगः स्याद्विषधरे तूनगो मन्दगामिनि ।
उद्योगः [3]प्रौढिमात्रेऽपि स्यादुत्तुङ्गस्तथोन्नते ॥
उत्सङ्गः [4]पूर्वभागे स्यादुल्वगो गर्भगामिनि ।
शीघ्रकर्मणि चोद्योगी कलिङ्गो नीवृदन्तरे ॥
कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृति ।
न द्वयोः कौटजफले महिलायां तु योषिति ॥
कालिङ्गी राजकर्कट्यां कालिङ्गो गजसर्पयोः ।
क्लिष्टाङ्गो रोगविक्षिप्ते कुरङ्गस्तु मृगान्तरे ॥

---

१ ख. (अ) ।
२ ख. पुस्तकेऽयं पाठो विशेषः ।
३ स्थिर, इति मा. ।
४ सन्निधावक्तास्तू, इति मा. ।

क्रूरगः क्रूरकर्माख्ये कृशाङ्गी तु भवेत्स्त्रियाम् ।
कृष्णाङ्गः कालसर्पे स्यात्खट्वाङ्गः शङ्करायुधि ॥
गुप्ताङ्गः कोशकीटे स्याच्चक्राङ्गो[१] मानसौकसि ।
चक्राङ्गी कटुरोहिण्यां चित्रगुः पावके रवौ ॥
जिह्मगः[२] सैंहिकेयेऽहौ तथा स्याद्वक्रगामिनि ।
तडाग[३]स्तु जलाधारविशेषे यन्त्रकूटके ॥
ऊर्मौ तरङ्गस्तलगस्त्वधोगामिनि गद्यते ।
तातगुः क्षुद्रताते स्याज्जनकस्य हितेऽपि च ॥
त्रिवर्गो धर्मकामार्थे त्रिफलायां कटुत्रिके ।
वृद्धिस्थानक्षये सत्त्वरजस्तमसि च स्मृतः ॥
तुरगी[४] चाश्वगन्धायां तुरगो[५] वाजिचित्तयोः ।
धाराङ्गोऽसौ च तीर्थे च नरङ्गस्तु वर[ण्ड]के ॥
मेहने न द्वयोश्चाथ नारङ्गः पिप्पलीरसे ।
[६]यमजे प्राणिनि विटे पादपेऽपि च कुत्रचित् ॥
निःसङ्गः सङ्गरहिते निसर्गो रूपसर्गयोः ।
निम्नगा तु नदीमात्रे निषङ्गः सङ्गतूणयोः ॥
पशुस्थमक्षिकायां तु पुमान्नीलङ्गुरुच्यते ।
भम्भराख्यां स्त्रियां, दूतविशेषे परगः स्मृतः ॥
पत्राङ्गं न द्वयोर्भूर्जे पद्मके रक्तचन्दने ।
पन्नगस्त्वौषधीभेदे तथा स्यात्पवनाशने ॥

---

१ ख. (ङ्गो) । २ ख. (कः) । ३ ख. (टाग) ।
४ क. (ङ्गी) ५ क. (ङ्गो) । ६ क. पु. अधिकोऽयं पाठः ।

प्लवङ्गप्लवगौ भेके वानरे[1] सूर्यसारथौ ।
परागः कौसुमे रेणौ धूलिस्नानीययोरपि ॥
गिरिप्रभेदे विख्यातावुपरागे च चन्दने ।
निदर्शने प्रयुक्तौ च प्रयोगः [2]कार्मणेऽपि च ॥
प्रवेगः स्याच्छीघ्रगतौ पतङ्गः पक्षिसूर्ययोः ।
शालिभेदे च शलभे प्रसङ्गो योगचर्चयोः ॥
तीर्थभेदे प्रयागः स्याद्यज्ञे शतमखाश्वयोः ।
क्लीबे सूते प्रियङ्गु स्यात्कणाराजिकयोः स्त्रियाम् ॥
[3]कङ्गुसस्ये फलिन्यां, च पुन्नागस्तु द्रुमान्तरे ।
जातीफले नरश्रेष्ठे पाण्डुनागे सितोत्पले ॥
भुजङ्गोऽहौ च [4]षिड्गे च मतङ्गः श्वपचे गजे ।
मतङ्गो जातिभेदेऽपि मुनावपि भवेत्क्वचित् ॥
मनोगः शीघ्रगेऽपि स्यात्पवने चित्तहारिणि ।
मातङ्गी स्याच्छक्तिभेदे मातङ्गस्त्वन्त्यजे द्विपे ॥
मृदङ्गः पटहे घोषे मेषगो ज्वलने मतः ।
रक्ताङ्गी स्त्री तु जीवन्त्यां क्लीबं विद्रुमधीरयोः ॥
महीसुते ना काम्पिल्ये, रथाङ्गं रथचक्रके ।
विहङ्गमप्रभेदे च रन्ध्रगः पिशुनेऽप्यहौ ॥
रुद्राङ्गः स्यात्तु कमठे वराङ्गं गजमस्तके ।
भगे चौषधभेदे च वराङ्गस्तु सुरूपके ॥

---

१ मण्डूके, इति मा. । २ क. क ।
३ ख. सस्यभेदे च निर्दिष्टः । ४ क. खि ।

वातिगः पुंसि [1]भण्टाक्यां वाच्यवद्वातुवादिनि ।
विहगस्तु नृलिङ्गे स्याद्विहगः[2] पक्षिबाणयोः ॥
विडङ्गस्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुन्नपुंसकम् ।
विसर्गस्तु पुमान् दाने [3]भास्करस्योत्तरायणे ॥
विसर्जनीये त्यागे च तथैव मलमोचने ।
वीरगा व्यभिचारिण्यां शवगा देवताभिदि ॥
श्वेताङ्गः शङ्करे कामपाले च तरुभिद्यपि ।
सर्वगस्तु विभौ शम्भौ सर्वगं सलिलेऽम्बरे ॥
सम्भोगः सुरते भोगे तथैव जिनशासने ।
संवेगः सम्भ्रमे प्रोक्तः संयोगः[4] स्यात्तु सङ्गमे ॥
सारङ्गो हरिणेऽश्वेऽपि चातके च मतङ्गजे ।
शलभेऽपि सुभोगस्तु भोगशालिनि गद्यते ॥
सुभगः कीर्तिसम्पन्ने स्फुलिङ्गोऽग्निकणे मतः ।
हलाङ्गो लोहिते दृष्टः करपत्रे च कच्छपे ॥
हताङ्गः स्याच्छिन्नदेहे [5]हृताङ्गः सैंहिकेयके ।
हेमाङ्गो गरुडे प्रोक्तो हेमा[6]ङ्गश्चापि वेधसि ॥
क्षताङ्गः स्यात्क्षतवति[7] क्षीणाङ्गोऽतिकृशे मतः ।

॥ इति गतृतीयम् ॥

---

१ भाण्टायामिति मा. । २ ख. ङ्गः ।
३ भास्करेऽप्यु इति मा. । ४ ख. गं ।
५ ख. हीनाङ्गी तु पिपीलिका ।
६ ङ्गमपि सर्पिषि, इति मा. । ७ क. वृत्ति ।

॥ अथ गचतुर्थम् ॥

अपवर्गस्तु मोक्षे स्यात्त्यागकार्यावसानयोः ।
साफल्ये, चाभिषङ्गस्तु शपथाक्रोशयोरपि ॥

पराभवे, चाभियोगो जयाय सह सेनया ।
रिपुं प्रत्यभियाने स्यादनुयोगो नियोजने ॥

अनुषङ्गोऽनुवृत्तौ स्यादनुरागो रतावपि ।
ईहामृगो [१]निगदितः कोकरूपकभेदयोः ॥

उपरागो निगदितो राहुग्रासेऽर्कचन्द्रयोः ।
दुर्नये ग्रहकल्लोले व्यसनेऽपि च गद्यते ॥

उपसर्गः स्मृतो रोगभेदोपप्लवयोरपि ।
एकपिङ्गस्तु धनदे कटभङ्गो नृपात्यये ॥

हस्तच्छेदेऽपि सस्यानां चन्द्रभागा नदीभिदि ।
चन्द्रभागी च गदिता, छत्रभङ्गस्तु गद्यते ॥

वैधव्ये वनितानां तु स्वातन्त्र्यन्नृप[२]नाशयोः ।
दीर्घाध्वगस्तु करभे तथा लेखवहेऽपि च ॥

पृष्ठशृङ्गी पुमान् दंशभीरौ क्लीबे[३] पृथूदरे ।
[४]मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि ॥

मातुलुङ्गो बीजपूरे मातुलिङ्गश्च कथ्यते ।
लोहिताङ्गो भूमिपुत्रे क्लीबे तु स्यात्प्रवालके ॥

---

१ ख. वृषे वाऽपि ।
२ ख. व्यय ।
३ पाठे, इति मा. ।
४ मच्छ, इति मा. ।

समायोगस्तु संयोगे समवाये प्रयोजने।
संप्रयोगस्तु सुरते कार्मणेऽप्यन्वितेऽपि[1] च॥
संप्रयोगी क्रियाकेलौ कामुके सम्प्रयोजने।

॥ इति गचतुर्थम्॥

---

॥ अथ गपञ्चमम्॥

ऐरावणोऽभ्रमातङ्गो भर्त्सने त्वपकारगीः।
कथाप्रसङ्गो वातूले विषवैद्ये च कीर्त्यते॥
नाडीतरङ्गः काकोले हिण्डके रतहिण्डके।

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये गान्तवर्गः॥

---

॥ अथ घान्ताः॥

घैकम्।

[2]घो घण्टासु समाख्यातः किङ्किणीषु समीरितः।
दुस्तरे घर्घरे घोषेऽप्यन्तर्धाने घटेऽपि च॥
घोऽश्वमेधे समाख्यातो दानवे घुर्निगद्यते।

---

१ कार्मणेऽप्यन्वितावपि, इति मा.।
२ ख. पु० अयं सार्द्धश्लोकः।

॥ अथ घद्वितीयम् ॥

अघं तु व्यसने दुःखे दुरिते च निगद्यते ।
अघो दैत्यविशेषे स्यादर्घः पूजाविधौ मतः ॥
अर्घोऽपि कथितो मूल्ये स्यादुद्घो देहजानिले ।
अग्नौ हस्तपुटे शस्तेऽप्योघो नृत्योपदेशयोः ॥
वृन्दे परम्परायां च वेगे च सलिलस्य च ।
मघा नक्षत्रभेदे स्याद्धान्यभेदे मघी मता ॥
मघो द्वीपान्तरे मेघो मुस्ताजलदयोः स्मृतः ।
मोघा तु पाटलायां स्याद्धीननिष्फलयोस्त्रिषु ॥
लघुर्मनोज्ञेऽप्यगुरौ निःसारे वाच्यलिङ्गवत् ।
शीघ्रे कृष्णागुरुणि च [1]पृक्कानामौषधावपि ॥
श्लाघा मता प्रशंसायां परिचर्याभिलाषयोः ।

॥ इति घद्वितीयम् ॥

---

॥ अथ घतृतीयम् ॥

अनघो निर्मलेऽपापे मनोज्ञे वाच्यलिङ्गवत् ।
अमोघः स्यात्तु सफले स्त्रियां पथ्याविडङ्गयोः ॥
अनर्घं स्यान्महामूल्ये ऽप्युल्लाघो दक्षनीरुजोः ।
तथैव च शुचौ कृच्छ्रे(ष्णो) काचिघः काञ्चने मतः ॥

---

१ ख. स्पृक्कानामौषधावपि ।

[1]छमण्डे मूषकेऽपि स्यान्निदाघः स्वेदवारिणि ।
ग्रीष्मकाले तथैवोष्णे परिघो गोपुरे मतः ॥
प्राकारे काचकलशे घटे च योगभिद्यपि ।
[2]अस्त्रे चाप्यर्गले घाते क्रोधे स्यात्प्रतिघो रुषि ॥
प्रतिघाते महार्घस्तु महामूल्ये च लावके ।
सर्वौघो गुरुवेगे स्यात्सर्व[3]सन्नहनेऽपि च ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये घान्तवर्गः ॥

---

॥ अथ ङान्ताः ॥

तिर्यङ् वक्रे तु देवद्र्यङ् देवमञ्चति यः पुनः ।
[4]भार्ङ्गी त्वौषधिभेदे स्याद्विश्वद्र्यङ् विश्वमञ्चति ॥
[5]शार्ङ्गं स्याद्धन्वनि हरेः स सध्र्यङ् साधुमञ्चति ।

॥ इति ङान्ताः ॥

---

॥ अथ चैकम् ॥

अथार्थे वाक्यविस्तारे प्रसङ्गे पादपूरणे ।
समयाने (?) बले शेषे चशब्दः परिपठ्यते ॥
चश्चन्द्रमाः समाख्यातस्तरणिश्चापि कीर्तितः ।
चश्चौरे समरे ख्यातः परौ च परिपठ्यते ॥

---

१ स, इति मा. । २ ख. भ । ३ ख. सन्ना ।
४ भार्गी, इत्यन्यत्र, अयं शार्ङ्ग चेति शब्दद्वयं गद्वितीये न्याय्यम् ।
५ ख. पुस्तकेऽयं पाठो दृश्यते ।

॥ अथ चद्वितीयम् ॥

अर्चा पूजाप्रतिमयोः प्रकाशेऽर्चिरथाञ्चले ।
अञ्चः, कचो गुरुसुते केशे शुष्कव्रणेऽपि च ॥
स्त्रियां कचा करिण्यां तु काचः शिक्ये[1] मणावपि ।
मृदन्तरे नेत्ररोगे काञ्ची सारसने पुरि ॥
कूर्चमस्त्री भ्रुवोर्मध्ये कत्थ(ठि)नश्मश्रुकैतवे ।
कुचः पयोधरे स्त्रीणां [2]क्रौञ्चः पर्वतपक्षिणोः ॥
भवेद्द्वीपप्रभेदेऽपि चर्चा स्यासकचिन्तयोः ।
चर्चा तलप्रहारे च तथा शब्दविदो विदुः ॥
चर्चिकायां, च चञ्चा तु तृणनिर्मितपूरुषे ।
चञ्चो [3]नलादिनिर्माणे चञ्चुस्त्रोष्ठ्यां[4] तु योषिति ॥
पुंसि पञ्चाङ्गुले चापि गोनाडीचे व्यडम्बके ।
नीचः खर्वे पामरे च पञ्चो विस्तारवाच्यपि ॥
पञ्च संख्यान्तरे प्राञ्चः प्राचीने प्राग्भवेऽपि च ।
पिचुर्ना कुष्ठभेदे च तूले कर्षेऽसु[5]रान्तरे ॥
भवेन्मञ्चस्तु पर्यङ्के मोचः सौभाञ्जनेऽप्यथ ।
मोचा कदल्यां शाल्मल्यां मोचने तु मुचिर्मता ॥
रुचिर्दीप्तौ च शोभायामभिष्वङ्गाभिलाषयोः ।
लुञ्चस्तु लुञ्चने प्रोक्तो वचः कीरे [6]वचौषधौ ॥

---

१ ख. (क्ये) । २ ख. पु० कुचकूचौ पयोधरे ।
३ लेखा, इति मा. । ४ क. कोष्ठ्यां ।
५ ख, इति मा. । ६ वनौ, इति मा. ।

सारिकायां च वाग्देव्यां भारत्यामपि तु स्त्रियाम्।
वर्चस्तेजसि निर्दिष्टं वीचिरूर्मौ सुखेऽपि च॥
अवकाशे शुचिर्ग्रीष्मे शृङ्गारे ज्वलनेऽपि च।
शुद्धमन्त्रिणि चाषाढे ज्येष्ठे पुंसि च गद्यते॥
तथा च धवले वर्णे शुद्धेऽनुपहते त्रिषु।
शुचिः स्यादपराधाभिनये शक्रस्त्रियां शची॥
सूची तु सीवनद्रव्ये सूचा स्यादपि[1] सूचने।
सुचिस्तु पात्रभेदे स्याद्यज्ञसम्बन्धिनि क्वचित्॥

॥ इति चद्वितीयम्॥

---

॥ अथ चतृतीयम्॥

अवाची तु प्रतीच्यां [2]स्यादरुचिः स्याज्ज्ञदान्तरे।
अरुचस्तु बिडाले स्यादवीचिर्नरकान्तरे॥
आनर्चिः स्याद्देशभेदे स्यादुदर्चिर्हुताशने।
उदीची दिग्विभेदे स्यादौदीच्यं तद्भवे त्रिषु॥
कणीचिः पुष्पितलतागुञ्जयोः [3]शकटेऽपि च।
कवचो गर्दभाण्डे च सन्नाहे [4]पटहेऽपि च॥
क्रकचः करपत्रेऽपि ग्रन्थिलाख्यतरावपि।
नमुचिस्तु स्मृतो दैत्यभेदे कुसुमकार्मुके॥

---

१ ख. (प)।
२ ख. (स्यादा)।
३ (सङ्क), इति मा.।
४ (पर्यटे), इति मा.।

नाराच्येषणिकायां स्याल्लोहबाणाम्बुहस्तिनोः ।
प्रपञ्चः स्यात्तु विस्तारे संश(च)येऽपि प्रतारणे ॥
मरीचं तत्प्रसूने स्यान्मरीचं तूषणे मतम् ।
मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम् ॥
मारीचः स्यात्तु कक्कोले राक्षसे याजकद्विषे[1] ।
मारीची देवताभेदे विपञ्ची [2]केलिवीणयोः ॥
विरिञ्चश्च विरिञ्चिश्च वैकुण्ठे परमेष्ठिनि ।
विकचः क्षपणे केतौ नाऽकेशे स्फुटितेऽपि च ॥
सङ्कोचः स्यान्मीनभेदे बन्धे[3] क्लीबं तु कुङ्कुमे ।
सप्तार्चिर्भास्करे वह्नौ साप्तार्चिस्तु शनैश्चरे ॥

॥ इति चतृतीयम् ॥

---

॥ अथ चचतुर्थम् ॥

जलसूचिर्जलौकायां शृङ्गाटे शिशुमारके ।
मलिम्लुचोऽधिमासे स्याच्चौरज्वलनयोरपि ॥

॥ इति चचतुर्थम् ॥

---

॥ अथ चपञ्चमम् ॥

सीत्कारे रतनारीचो नारीणां च शुनि स्मिते ।
कुक्कुरे च तथा पञ्चसायके परिकीर्तितः ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये चान्तवर्गः ॥

---

१ क. (जे) । २ (कोल) इति मा. । ३ (गन्धे), इति मा. ।

॥ अथ छान्ताः ॥

॥ अथ छैकम् ॥

[1]निर्मले छः समाख्यातः सरणिस्थः प्रकीर्तितः ।
छेदने छः समाख्यातो जपसिद्धौ च कीर्तितः ॥
छं छन्दश्च समाख्यातं तडिति छं प्रचक्षते ।

---

॥ अथ छद्वितीयम् ॥

अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम् ।
आभिमुख्ये भवेदाच्छ आयामे परिपठ्यते ॥
शब्दवेदिभिरिच्छा तु समीहावीप्सयोर्मता ।
उञ्छस्तु मुनिवृत्तौ स्याद्दिवासे तूञ्छिरुच्यते ॥
[2]अनूपदेशे कच्छः स्यान्नौकाङ्गे तुन्नकद्रुमे ।
वाराह्यां परिधाने स्यात्पश्चादञ्चलपल्लवे ॥
चीरिकायां च कच्छा च स्त्रियां, गुच्छः [3]पुमान्मतः ।
स्तबके हारभेदे च तथा स्तम्बकलापयोः ॥
पिच्छा तु शाल्मलीवेष्टे पङ्क्तावाश्रमपादपे ।
मोचापूगच्छटाकोशभक्तसम्भूतमण्डके ॥
लाङ्गूले बर्हिचूडायां तथैवाश्वपदामये ।
पिच्छं पुच्छे तु गदितं पृच्छा प्रश्ने प्रकीर्तिता ॥
[4]भर्च्छा निर्भर्च्छने प्रोक्ता मृच्छा स्यात्परिमार्जने ।
म्लेच्छस्तु जातिभेदे स्यान्म्लेच्छः स्यादपभाषणे ॥

---

१ ख. पु० सार्धश्लोकोऽधिकः । २ ख. आ ।

३ ख. (स्त्रियां मतः) पाठान्तरम् । ४ ख. पुस्तके सार्धश्लोकोऽधिकः ।

तथा पामरभेदे च पापरक्ते च कीर्तितः ।
[१]भवेद्युच्छः प्रमादेऽपि कथ्यते त्वयलक्षणे ॥
लच्छलाच्छौ निगदितौ मता स्फूर्छा तु विस्तृतौ ।
लज्जायां तु भवेद् हृच्छा हृर्छा कौटिल्यवाचिनि ॥

॥ इति छद्वितीयम् ॥

---

॥ अथ छतृतीयम् ॥

तपिच्छमपि तापिच्छं कथितं हेम्नि शाब्दिकैः ।
शिलोञ्छं च भवेदुञ्छशिलवन्मुनिवर्तने ॥

॥ इति छतृतीयम् ॥

---

॥ अथ छचतुर्थम् ॥

कोलपुच्छस्तु कङ्के स्याच्छिलमुञ्छं(?) शिलोञ्छके ।
महाकच्छस्तु पुंसि स्यात्समुद्रे च प्रचेतसि ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये छान्तवर्गः ॥

---

॥ अथ जान्ताः ॥

जूराकाशे सरस्वत्यां पिशाच्यां जवनेऽस्त्रियाम् ।

॥ अथ जद्वितीयम् ॥

अजो हरौ हरे कामे विधौ छागे रघोः सुते ।
अब्जो धन्वन्तरौ चन्द्रे शङ्खे च निचुले तरौ ॥

---

१ ख. पु० नाय पाठः ।

अब्जं पद्मे रणे त्वाजिः स्त्रियामोजस्तु तेजसि ।
क्लीबेऽथोर्जः कार्तिककबलोत्साहेषु कीर्तितः ॥
ऊर्जं [1]जले भवेत् क्लीबमृजुस्त्वकुटिले मतः ।
पीयूषपद्मयोः कञ्जं कञ्जः केशे स्वयंभुवि ॥
कुजस्तु नरके भौमे कात्यायन्यां कुजा मता ।
कुञ्जोऽस्त्रियां निकुञ्जे च हनौ[2] दन्ते च दन्तिनाम् ॥
कुब्जो न्युब्जे वृक्षभेदे खञ्जः स्यात्कुटिलाङ्घ्रिके ।
खञ्जा छन्दःप्रभेदेऽपि खजा मन्थप्रहस्तयोः ॥
खर्जूः कीटान्तरे कण्ड्वां खर्जूरीपादपेऽपि च ।
गञ्जा गोष्ठे सुरागेहे भाण्डागारे खनावपि ॥
रीढायामपि गञ्जः[3] स्याद्गुञ्जोक्ता तु कलध्वनौ ।
पटहे काकचिञ्चायां द्विजस्त्रैवर्णिके मतः ॥
दन्ताण्डजेषु च पुनर्द्विजा भार्ङ्गी हरेणुके ।
ध्वजः स्याच्छौण्डिके मेढ्रे पताकायां तु न स्त्रियाम् ॥
तथा चिह्ने च खट्वाङ्गे ध्वजी तु पृथिवीधरे ।
रथब्राह्मणयोश्चापि भुजङ्गमतुरङ्गयोः ॥
निजं स्वकीये नित्ये च निर्दिष्टं शब्दवेदिभिः ।
कर्मरङ्गफले न्युब्जं [4]कुब्जाधोमुखयोरपि ॥
प्रजा जने च सन्ताने पिञ्जा तूलहरिद्रयोः ।
पिञ्जा स्त्रियां मता तूलपिञ्जिकायां बुधोत्तमैः ॥

---

१ (जंमन्ये), इति मा. । २ ख. (हतौ) ।
३ (ञ्जा), इति मा. । ४ ख. (कुला) ।

क्लीबं बले वधे पुंसि त्रिलिङ्गं व्याकुले मतम्।
फञ्जी लताविशेषे स्याद्बीजं कारणसस्ययोः॥
भुजा द्वयोः करे बाहौ मज्जोक्ता धातुभिद्यपि।
मज्जा स्त्रियां च गदिता मर्जूः शुद्धौ[1] तु धावके॥
पुमान्, रजः परागे स्यादार्तवे च गुणान्तरे।
रेणावपि भवेद्रज्जुर्वेण्यामपि गुणेऽपि च॥
राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ।
राजिस्तु पङ्क्तौ रेखायां रुजा स्याद्भङ्गरोगयोः॥
लज्जा त्रपायां गदिता लञ्जा स्याद्दारयोषिति।
लाजाः स्युः सतुषे भृष्टधान्ये लाजमुशीरके॥
तथार्द्रतन्दुले[2] लाजो व्रजो गोष्ठे तथाध्वनि।
समूहे च भवेद्वाजो घृतयज्ञान्नवारिषु॥
पक्षे च निःस्वने वेगे व्याजः शाठ्योपदेशयोः।
पुमान् वणिजि सर्जूः स्यात् स्त्रियां विद्युति गद्यते॥
सञ्जो रुद्रे विधौ प्रोक्तः स्वजः प्रस्वेदपुत्रयोः।
सज्जं रक्तेऽथ सज्जः स्यात्सन्नद्धे सम्भृतेऽपि च[3]॥
सर्जस्तरुविशेषे स्याद्हृज्जः कामे प्रकीर्तितः।
आह्वाने तु भवेद् हञ्जे नाट्योक्तौ चेटिकां प्रति॥

॥ इति जद्वितीयम्॥

---

१ मर्जा शुद्धः, इति मा.। २ ख. ताण्डुले। ३ ख. त्रिषु।

॥ अथ जद्वितीयम् ॥

अण्डजो मृगनाभौ स्याज्झषेऽहौ सरटे खगे ।
अम्बुजो निचुले पुंसि[1] शङ्खे क्लीबं तु वारिजे ॥
अङ्गजं रुधिरेऽनङ्गकेशपुत्रमदेषु च ।
अनुजोऽवरजे छिन्नबाहुके त्वभुजः स्मृतः ॥
करजस्तु करञ्जे स्यान्नखे व्याघ्रनखेऽपि च ।
काम्बोजो[2] हस्तिभेदे च शङ्खदेशविशेषयोः ॥
काम्बोजी माषपर्ण्यां च हिङ्गुपर्ण्या[3]मपि क्वचित् ।
काम्बोजस्तुरगे सोमवल्के पुन्नागपादपे ॥
गजार्भके कारुजः स्याद्वल्मीके [4]गैरिकेऽपि च ।
स्वयञ्जाततिले फेने तथा स्यान्नागकेसरे ॥
कारुजः शिल्पिनां चित्रे कुटजः स्याद्द्रुमान्तरे ।
अगस्त्यद्रोणयोश्चापि गिरिजं त्वभ्रके मतम् ॥
शिलाजतुनि शैवाले लोहे च गिरिजा पुनः ।
अपर्णायां मातुलुङ्ग्यां[5] जलजं कमले मतम् ॥
पुमाञ् शङ्खे नीरजश्च नीरजं पद्मकुष्ठयोः ।
परञ्जस्तैलपिञ्जे स्याच्छुरिकाकरवालयोः ॥
[6]देवोद्याने तु वैभ्राजमिति तत्त्वार्थवादिनः ।
बलजं क्षेत्रपूर्द्वारे बलजा वल्गुदर्शना ॥

---

१ (लतरौ), इति मा. । २ (कंवाजो), इति मा. ।
३ (पच्या), इति मा. । ४ ख. (गौ) । ५ लङ्ग्यामिति मा. ।
६ देवोद्याने तु वैभ्राजमित्यारभ्य यावद् ढान्तवर्गं ख पुस्तके नास्ति ।

बलजं गोपुरे क्षेत्रे सस्यसङ्गरयोरपि ।
बलजा वरयोषायां वसुमत्यामपि स्मृता ॥
बाहुजः क्षत्रिये तु स्याद्भूमिजो नरकारयोः ।
भूमिजापि च जानक्यां भानुजो यममन्दयोः ॥
घटोत्कचे भीमजः स्यान्मनोजः पञ्चसायके ।
मनुजो नरमात्रेऽपि यवजः क्षारभिद्यपि ॥
रम्भाजः स्यात्तु कर्पूरे वनजो मुस्तके मतः ।
मुद्गपर्ण्यां तु वनजा क्लीबं स्यान्मुस्तकेऽम्बुजे ॥
उरोजे स्यात्तु वक्षोजः[१] शिलाजमपि पत्रके ।
शूकजं त्वौषधभिदि शिलाजतुनि शैलजम् ॥
सहजस्तु निसर्गे स्यात्सहोत्थे वाच्यलिङ्गवत् ।
समजः पशुवृन्देऽपि विपिने तु नपुंसकम् ॥
[२]सामजस्तु गजे पुंसि सामोत्थे पुनरन्यवत् ।
सिन्धुजं लवणे प्रोक्तमन्यवत्सिन्धुदेशजे ॥
हिमजा तु शचीगौर्योर्मैनाके हिमजः स्मृतः ।

॥ इति जतृतीयम् ॥

---

॥ अथ जचतुर्थम् ॥

कनिष्ठेऽवरजः प्रोक्तस्त्वहिभुग् बर्हितार्क्ष्ययोः ।
कान्यकुब्जं कन्यकुब्जं समानं नीवृदन्तरे ॥

---

१ वक्षोजस्तूरजे प्रोक्तमिति मा. । २ (सम), इति मा. ।

काश्मीरजं केसरे च कुष्ठे क्लीबेऽथ योषिति।
वदन्त्यतिविषायां च ग्रहराजो दिवाकरे॥

गिरिराजः पुमान्मेरौ क्लीबं कालायसे (?)मतम्।
जघन्यजस्त्ववरजे वृषलेऽथ निशाकरे[1]॥

[2]वैनतेये द्विजराजो तथोक्तोऽनन्तभोगिनि।
देवराजः सुनासीरे धर्मराजो युधिष्ठिरे॥

समवर्त्तिनि बुद्धे च भारद्वाजो विहङ्गमे।
मुनौ च वनकार्पास्यां भारद्वाजी पुमानथ॥

गुरोः पुत्रे पांडवानामाचार्येऽपि मतः पुमान्।
पक्षिराजो वैनतेये पर्णराजिस्तरौ क्वचित्॥

भृङ्गराजः पक्षिभेदे मार्कवे च मधुव्रते।
मृगराजस्तु पञ्चास्ये महाराजो महीपतौ॥

यक्षराजस्तु धनदे मल्लानां रङ्गबन्धने।
राजराजः कुबेरेऽपि सार्वभौमे निशाकरे॥

वनायुजोऽश्वभेदे स्यादपि वानायुजो मतः।
क्षीराब्धिजो निशाकान्ते लक्ष्म्यां क्षीराब्धिजा मता॥

॥ इति जचतुर्थम्॥

---

१ द्विजराजो निशाकरे, इति मा.। २ वैनतेयेऽपि वृषले, इति मा. पा.।

॥ अथ जपञ्चमम् ॥

ऋषभध्वजस्तु हरे तद्वद्वृषभध्वजोऽप्यस्मिन् ।
तथैव शाक्यविशेषे गगनध्वजस्तु कथ्यते मेघे ॥

कज्ज(ल)ध्वजश्च दीपे मुनिभेषजं च लङ्घने प्रोक्तम् ।
तथैव चागस्त्यहरीतक्योरप्युक्तमेतद्धि ॥

पन्नध्यां पादविरजाः कथिता तु विशारदैः ।
वालवायजमिच्छन्ति वैडूर्यमणिमुत्तमाः ॥

॥ इति जपञ्चमम् ॥

---

॥ अथ जषष्ठम् ॥

श्रुतश्रवोऽनुजः प्रोक्तस्तत्त्वविद्भिः शनैश्चरे ।

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये जान्तवर्गः ॥

---

॥ अथ झान्तवर्गः ॥

उझस्तु स्यात्त्यागशीले झञ्झा ध्वन्यन्तरे मता ।
अप्यम्बुकणदृष्टावप्युक्ता सा शब्दवेदिभिः ॥

इति झान्तवर्गः ॥

---

॥ अथ ज्ञान्तवर्गः ॥

॥ अथ ज्ञैकं ज्ञद्वितीयञ्च ॥

ज्ञो ब्रह्मबुधविद्वत्सु स्यादज्ञो जडमूर्खयोः।
प्रज्ञस्तु पण्डिते बुद्धौ प्रज्ञा राज्ञी नृपस्त्रियाम्॥

विज्ञस्तु विदुषि प्रोक्तो यज्ञस्तु क्रतुमात्रके।
विष्णौ च संज्ञरुद्दिष्टस्तथा संहतजानुके॥

संज्ञा नामनि गायत्र्यां चेतनायां रविस्त्रियाम्।
अर्थस्य सूचनायां च हस्ताद्यैरपि गद्यते॥

सुज्ञः पण्डितमात्रे स्यात्।

॥ इति ज्ञद्वितीयम् ॥

---

॥ अथ ज्ञतृतीयम् ॥

अवज्ञा स्यात्तिरस्कृतौ।
अनुज्ञा स्यादथाज्ञायामभिज्ञोऽपि च पण्डिते॥

कालज्ञश्च, कलाज्ञश्च कलाविदि निगद्यते।
कालज्ञः कुक्कुटे ज्योतिर्विदि चाप्यभिधीयते॥

कृतज्ञः कुक्कुरे पुंसि मर्यादिन्यभिधेयवत्।
दैवज्ञः स्यात्तु गणके वैद्ये दोषज्ञ ईरितः॥

सर्वज्ञस्तु शिवे बुद्धे म्लेच्छज्ञो वाच्यलिङ्गकः।
पुंस्यात्मनि प्रधाने च—

॥ इति ञतृतीयम्॥

॥ अथ ञचतुर्थम्॥

षडभिज्ञस्तथार्हते॥

इति शब्दरत्नसमन्वये राजकोशापरपर्याये ञान्तवर्गः॥

॥ अथ टान्तवर्गः॥

॥ अथ टद्वितीयम्॥

अट्टं गृहान्तरेऽत्यर्थे क्षौमे शुष्केऽन्धसि स्मृतम्।
सङ्ख्याविशेषे त्वष्टेति तथाऽऽटिर्विहगान्तरे॥
अष्टिर्वृत्तविशेषेऽपि निर्दिष्टा तत्त्ववेदिभिः।
इष्टिस्तु सङ्ग्रहश्लोके तथा यागाभिलाषयोः॥
इष्टमाशंसिते पूज्यतमे प्रियतमेऽन्यवत्।
इष्टं संस्कारयोगे च यागे च क्रतुकर्मणि॥
कटः श्रोणौ शवरथे किलिञ्जेऽतिशये शरे[1]।
समये गजगण्डेऽपि पिप्पल्यां तु कटी मता॥
कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि।
रसभावे तु पुल्लिङ्गमकार्ये तु नपुंसकम्॥
त्रिषु तद्वत्सुगन्ध्योश्च[2] मत्सरेऽपि खरेऽपि च।
कष्टं तु गहने कृच्छ्रे क्रुष्टं रोदनरावयोः॥

१ क्रमे, इति मा.। २ न्धे च, इति मा.।

कुष्टं स्यादौषधे रोगविशेषेऽपि कुटी मता ।
कुम्भदास्यां सुरायां च तथोक्ता चित्रगुच्छके ॥
कूटोऽस्त्री निश्चले राशौ सीरावयवयन्त्रयोः ।
मायाद्रिशृङ्गयोस्तुच्छे लौहमुद्गरदण्डयोः ॥
अनृतेऽपि, बुधे कृष्टः कृष्टिराकर्षणे मता ।
कोटिः स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः ॥
खटस्तु कूपकफयोः प्रहारान्तरटङ्कयोः ।
खाटिः शवरथेऽपि स्यात्किणेऽपि स्यादसद्ग्रहे ॥
खेटः कफे ग्रामभेदे चर्मण्यप्यस्त्रवत्यपि ।
गृष्टिः सकृत्प्रसूतायां गवि स्याद्बदरेऽपि च ॥
घटा घटनगोष्ठीभघटनासु च कथ्यते ।
घटः समाधिभेदेभशिरकूटकुटेषु च ॥
घटी स्त्रियां कालमानकुम्भयोः पुंसि तद्वति ।
घृष्टिस्तु घर्षणस्पर्द्धाविष्णुक्रान्तासु ना किरौ[१] ॥
घोण्टा तु बदरीपूगवृक्षयोश्च निगद्यते ।
चटु चाटु प्रिये वाक्ये चाटुकारे चटुः पुमान् ॥
व्रतीनामासने चापि [२]पिचण्डेऽपि निगद्यते ।
जटामांस्यां लग्नकचे वृक्षमूले वटे जटी ॥
उच्छिष्टे तु भवेज्जुष्टं सेवितेऽपि च वाच्यवत् ।
झाटो निकुञ्जे कान्तारे व्रणादिपरिमार्जने ॥

---

१ किटौ, इति मा. ।    २ वि, इति मा. ।

झिण्टी त्वौषधिभेदे स्यादित्याहुः शब्दवेदिनः ।
तटं क्षेत्रे प्रतीरे च त्रिषु, त्वष्टा दिवाकरे ॥
तक्षमात्रेऽपि देवानां शिल्पिन्यपि निगद्यते ।
स्यात्त्रुटिः संशये स्वल्पे सूक्ष्मैलाकालमानयोः ॥
त्रोटिस्तु कट्फले चञ्च्वां खगमीनविशेषयोः ।
दिष्टं दैवे पुमान् काले दिष्टिर्मुत्परिमाणयोः ॥
स्त्रियां दृष्टिस्तथा बुद्धौ दर्शने लोचनेऽपि च ।
परीक्षार्थे तुलायां च धटश्चौरे धटी मता ॥
नटी हट्टविलासिन्यां नील्यां शैलूषशोणयोः[1] ।
पटः पियालवृक्षे स्यात्पटे चित्रपटेऽपि च ॥
पटुस्तु चतुरे दक्षे नीरोगे चाभिधीयते ।
छत्राके लवणे क्लीबे पटोले तु पुमानसौ ॥
पट्टी ललाटभूषायां तथा लाक्षाप्रसादने[2] ।
पट्टः पेषणपाषाणे व्रणादीनां च बन्धने ॥
चतुष्पथेऽथ राजादिशासनान्तरपीठयोः ।
पट्टिस्तु पटभेदे स्त्री ललाटे कुम्भिकाद्रुमे ॥
पुष्टिस्तु पोषणे वृद्धौ [3]पृष्टिस्तु परिमार्जने ।
पोटेति गदिता सद्भिर्या स्त्री पुरुषलक्षणा ॥
फटा फणायां दम्भे च फाण्टः स्यादौषधान्तरे ।
बटुः स्याद्देवताभेदे बटुस्तु ब्रह्मचारिणि ॥

---

१ नटः, इति शेषः ।	२ घने, इति मा. ।	३ घृ, इति मा. ।

भटः स्यात्पामरे पुंसि वीरे चापि भटो मतः।
भृष्टिः स्त्रियां मता शून्यारामे चैव तु भर्जने ॥
अव्यक्तवाचि म्लिष्टं स्यान्म्लाने स्याद्वेद्यगामि तत्।
मुष्टिर्बद्धाङ्गुलिकरे तथैव स्त्री [1]पलान्तरे ॥
यष्टिस्त्सरौ तु पुंसि स्यात्तथैव भुजदण्डके।
द्वयो[2]र्हारलताभार्य्योर्मधुकाशस्त्रभेदयोः ॥
रिष्टः खड्गे फेनिले च रिष्टं स्यादशुभेऽपि च।
रिष्टिः खड्गे नाऽशुभे स्त्री लाटोऽनुप्रासदेशयोः ॥
[3]अंशुके सारिकायां तु लट्टा शाकान्तरेऽपि च।
वटी वृक्षविशेषे तु वाटो मार्गे वृतिस्थले ॥
वाटी वनविशेषे स्यात्खदिरेऽद्रौ विटः[4] स्मृतः।
तथैव लवणे शङ्के [5]मूषिकेऽपि निगद्यते ॥
विष्टिः कर्मकरे पुंसि भद्राख्ये करणे स्त्रियाम्।
प्रेषणे वेतने चापि व्युष्टं कल्ये निगद्यते ॥
व्युष्टिः फले समृद्धौ च षष्टिः सङ्ख्यान्तरे मता।
तथा व्रीहिविभेदे च सृष्टिः सर्गे तु योषिति ॥
सृष्टं तु निश्चिते क्लीबं प्राज्यनिर्मितयोस्त्रिषु।
सटा जटाकेसरयोः स्फुटं व्यक्ते विकस्वरे ॥
व्याप्ते त्रिषु स्फुटिर्योषित्पादस्फोटामयेऽपि च।
निर्भिन्ने कर्कटीबीजेऽप्यथ सृष्टं विनिर्मिते ॥

---

१ लता, इति मा.। २ र्भा, इति मा.। ३ शुके च, इति मा.।
४ टिरिति मा.। ५ मूल, इति मा.।

युक्तनिश्चितयोः प्राज्ये त्रिषु सृष्टिस्तु निर्मितौ ।
स्वभावे चापि गदिता हृष्टो रोमाञ्चिते तथा ॥
सहर्षेऽपि प्रहसिते[1] विस्मितेऽपि निगद्यते ।
हट्टो वणिक्पथे प्रोक्तो हटी पुरतटी मता ॥
अक्षोटवन्मतः सद्भिः क्षोटो वृक्षान्तरे क्वचित् ।

॥ इति टद्वितीयम् ॥

---

॥ अथ टतृतीयम् ॥

अमृष्टमप्रिये प्रोक्तमस्पष्टमपि सङ्कुले ।
अरिष्टमशुभे तक्रे सूतिकागार आसवे ॥
अशुभे मृत्युचिह्ने चाप्यादितेये तु कुत्रचित् ।
अरिष्टो लशुने निम्बे फेनिले काककङ्कयोः[2] ॥
अभीष्टमीप्सिते दैवे त्वदृष्टमिति गद्यते ।
अधृष्टं भीरुणि प्राहुरपटुं मूर्खरोगिणोः ॥
अवटस्तु खिले[3] गर्ते कूपे कुहकजीविनि ।
आदेशिते स्यादादिष्टमाघ्रातोच्छिष्टयोरपि ॥
प्रेतादिभिर्गृहीतो यः स आविष्ट इतीरितः ।
[4]उत्कटं त्रिषु शून्येऽथाप्युत्कटस्तीव्रमत्तयोः ॥
[5]उद्भटःकच्छपे सूर्येऽप्युद्भटा वीरुधान्तरे ।
उद्भटः स्यादतिप्रौढेऽप्युत्सटो मृगनायके ॥
कर्कटो राशिभेदे स्यात्कुलीरे विहगान्तरे ।
करटस्त्विभगण्डे स्यात्कुसुम्भे निन्द्यजीविनि ॥

---

१ तिह्नते, इति मा. । २ कोकयोः, इति मा. । ३ बिले, इति मा. ।
४ उभ्र, इति मा. । ५ उन्माद, इति मा. ।

एकादशाहश्राद्धे च दुर्दुरूटेऽपि वायसे ।
करटो वाद्यभेदे स्यात्कर्कटी तु फलान्तरे ॥
शिरोस्थिनि करोटिः स्यात्कर्पटं त्वथ वाससि ।
कलाटी[1] तु प्रकोष्ठे स्यादित्याहुः पण्डिता जनाः ॥
कपटं स्यात्कैतवेऽथ कार्प्पटो जतुकार्यिणोः ।
कवाटं च कुवाटं च कपाटे कथितं बुधैः ॥
किलाटः शोषितक्षीरपिण्डे सूरिभिरिष्यते ।
कीकटो देशभेदे स्यान्निःस्वकृपणयोरपि ॥
कुरुण्टी दारुपुत्र्यां स्याज्झिण्ट्यम्लानप्रभेदयोः ।
कुक्कुट्यन्टतचर्यायां कुक्कुटश्चरणायुधे ॥
निषादशूद्रयोः पुत्रे तृणोल्कायां च कुक्कुभे ।
मनःशिलायां कुलटी नैपाल्यामथ योषिति ॥
स्वैरिण्यां, च कूपीटं तु मतं जठरतोययोः ।
कृकाटोऽवयवे क्वापि केशटो हर्यजौ कणे[2] ॥
[3]कोयष्टिः कथितः शब्दवेदिभिर्जलकुक्कुभे ।
अकेशमूर्ध्नि खल्वाटः खर्वटः कण्टकावृते ॥
खर्वटो ग्रामभेदेऽपि घरट्टश्चाश्मयन्त्रके ।
चर्पटः स्फारविपुले चपेटेऽपि च पर्पटे ॥
चक्राटो विषवैद्ये च धूर्तदीनारयोरपि ।
चिपिटः स्यात्खाद्यभेदे तथा पिट्टिकविस्तृते[4] ॥

---

१ कलाची, इत्यपरे । २ केशाटो जन्तुभिद्यपि, इति मा. ।
३ इदं पद्यं मातृकायां टचतुर्थं आसीत् । ४ पिच्छलविस्तृते, इति मा. ।

चर्वटा व्रीहिभेदे स्याच्चर्वटी पण्ययोषिति ।
चिरण्टी तु सुवासिन्यां स्याद्द्वितीयवयःस्त्रियाम् ॥
वार्ताकुपुष्पे जकुटं[१] पुंसि स्यान्मलये शुनि ।
च्यङ्गटं स्याच्छिक्यभेदे धौताञ्जन्यां च योषिति ॥
त्रिकूटः शैलभेदे स्यात्त्रिकूटं लवणेऽब्धिजे ।
त्रिपुटा स्यान्मल्लिकायां सूक्ष्मैलात्रिवृतोरपि ॥
सतीलके[२] तथा तीरे त्रिपुटः समुदाहृतः ।
दार्वटं तु मन्त्रवेश्मन्याहुर्दृढतरा नराः ॥
द्रोहाटो मृगलुब्धे स्याद्गाथाभेदे च कथ्यते ।
तथा बैडालव्रतिके धाराटश्चातकाश्वयोः ॥
निष्कुटः स्याद्गृहोद्याने केदारे च कवाटके ।
निर्दटः स्याद्दयाशून्ये निर्दिष्टो निष्प्रयोजने ॥
परापवादरक्ते च वाच्यलिङ्गोऽयमिष्यते ।
बहुमानुषसङ्कीर्णे स्थले निर्मुटमुच्यते ॥
पुरोटिः पुरसंस्कारे गदिता तत्त्ववेदिभिः ।
पर्पटः स्याद्भक्ष्यभेदे तथोक्तो भेषजान्तरे ॥
[३]प्रवेष्टमन्तश्चेभानां दन्तमांसं विदुर्बुधाः ।
पर्कटी नूतनफले तथा च [४]प्लक्षपादपे ॥
परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणेऽपि च ।
पाचटः कर्पटे[५] पुंसि क्रशे स्यादभिधेयवत् ॥

---

१ जुटं, इति मा. ।　२ नके, इति मा. ।　३ कोशान्तरे पुंस्ययम् ।
४ प्लव, इति मा. ।　५ पाचाटः पर्यटे, इति मा. ।

पिच्चटः स्यान्नेत्ररोगे क्लीबं सीसकरङ्गयोः ।
भावाटः कामुके साधौ निवेशे भावके नटे ॥
भाकूटः स्याच्छैलभेदे तथैव च झषान्तरे ।
मर्कटी स्यात्तु चक्राङ्ग्यां[१] मर्कटस्य च योषिति ॥
करञ्जे शूकशिम्ब्यां च तथा वानरलूतयोः[२] ।
मोरटं तु भवे[३]दिक्षुमूलाङ्कोटप्रसूनयोः ॥
मोरटं सप्तरात्रोर्ध्वक्षीरे मूर्व्यां तु मोरटा ।
वरटी हंसयोषायां गन्धोल्यामपि गद्यते ॥
वर्णाटो गायने चित्रकरे स्त्रीकृतजीवने ।
विकटा वज्रवाराह्यां विषूरुविकरालयोः ॥
शब्दविज्ञैर्निगदितो विपाटस्तु पतत्रिणि ।
वेकटः स्यान्मल्लभेदे यूनि वैकटिकेऽपि च ॥
शकटं रथभेदे[४]स्याच्छाकटस्तस्य वोढरि ।
शाकटं धवटक्षे[५]ऽपि निगदन्ति च पूर्यपि ॥
शैलाटो देवले सिंहे [६]शुक्लकाचकिरातयोः ।
समष्टिर्मेलने प्रोक्ता संसृष्टमपि सङ्गते ॥
वमनादिविशुद्धेऽपि स्वादिष्टं स्वनियोजिते ।
स्वादिष्टं चापि गदितं यत्स्यात्स्वादुरसाचितम् ॥

॥ इति टत्रतीयम् ॥

---

१ मूपश्चिम्ब्यां स्यादिति ।
२ पुंसीति शेषः ।
३ दिच्युमूलक्रोड इति मा. ।
४ शकटं रत्तोभेदे, अनङ्गि चेति परे ।
५ खलावस्ले, इति मा. ।
६ शुक्लकाक, इति मा. ।

॥ अथ टचतुर्थम् ॥

उरःकुटं तु बालोपवीते शब्दविदो विदुः ।
उच्चिङ्गटो मीनभेदे तथा कोपनपूरुषे ॥
करहाटोऽब्जकन्दे स्यात्पुष्पवृक्षप्रभेदयोः ।
कार्यपुटस्तु चार्वाकोन्मत्तानर्थकरेषु च ॥
कामकूटस्तथा वेश्याप्रिय[1]विभ्रमयोरपि ।
कुटन्नटस्तु स्योनाके कैवर्त्यां अपि मुस्तके ॥
कुण्डकीटस्तु चार्वाके वचनाभिज्ञपूरुषे ।
पतितब्राह्मणीपुत्रे तथा दासीरतेऽपि च ॥
खञ्जरीटः पक्षिभेदे, खञ्जरीटस्तु गद्यते ।
फलकेऽप्यसिधाराख्यव्रतधारिणि पूरुषे ॥
गाढमुष्टिस्तु कृपणे कृपाणेऽपि निगद्यते ।
चक्रवाटः क्रियारोहे पर्यन्ते[2] च शिखातरौ ॥
चतुःषष्टिः कलासङ्ख्याप्रभेदे बह्वृचेऽपि च ।
विद्याविख्यातविभवे भण्डे चाटुपटुः स्मृतः ॥
नारकीटोऽश्मकीटे स्यात्स्वदत्ताशाविहन्तरि ।
परपुष्टः पिके चान्यपुष्टे स्याद्वाच्यलिङ्गवत् ॥
परपुष्टा वारनार्यां प्रतिकृष्टं द्विकर्षिते ।
गर्ह्ये च, प्रतिसृष्टस्तु प्रत्याख्याते च प्रेषिते[3] ॥
रामाश्रमे पञ्चवटी क्लीबे बालोपवीतके ।
मुखम्पटो[4] याचके तु गदितो वसुकीटवत् ॥

---

१ विभ्रु, इति मा. । २ र्वते, इति मा. ।
३ प्रख्याते प्रेषितेऽपि च, इति मा. । ४ चो, इत्यन्यत्र ।

यज्ञस्थाने यज्ञवाटं राहूच्छिष्टं रसोनके ।
वर्वराटः कटाक्षे स्यात्तरुणादित्यरोचिषि ॥
नारीपयोधरोत्सङ्गकान्तदन्तनखक्षते ।
शिपिविष्टस्तु खलतौ हरौ दुश्चर्मणीश्वरे ॥
उक्तः श्रुतिकटुः प्राञ्चलोहेऽहौ पापशोधने ।

॥ इति टचतुर्थम् ॥

---

॥ अथ टपञ्चमम् ॥

नवोढावस्त्रमानन्दपटमिच्छन्ति सूरयः ।
ग्राहे जलकिराटश्च गदितस्तत्त्ववेदिभिः ॥
अथ [1]स्याद्दशनोच्छिष्टः निश्वासाधरचुम्बयोः ।
प्रासादकुक्कुटः सद्भिर्मतो गृहकपोतके ॥
चित्रोक्तौ पुष्पशकटीं वदन्ति निपुणा जनाः ।

॥ इति शब्दरत्नसमन्वये राजकोशपरपर्याये टान्तवर्गः ॥

---

॥ अथ ठान्तवर्गः ॥

॥ अथ ठैकम् ॥

श्री(?)ठः शून्ये ॥

॥ इति ठैकम् ॥

---

१ स्यादृसुन्वो, इति मा. ।

॥ अथ ठद्वितीयम् ॥

कठःस्वर ऋचां भेदे स्यात्तदध्येतृवेदिनोः।
मुनिभेदे वारिपर्ण्यां तथा स्यात्प्रसभेऽपि[1] च ॥

कण्ठो ध्वनौ सन्निधाने गले मदनभूरुहे।
काष्ठा दारुनिशायां स्यात्कालमानप्रभेदयोः ॥

दिशि च स्थानमात्रेऽपि काष्ठमाख्यातमिन्धने।
कुष्ठं रोगे पुष्करे[2] च कुठः स्याद्वृक्षमात्रके ॥

तत्रैव कुठिरित्युक्तः कुण्ठोऽकर्मण्यमूर्खयोः।
कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च ॥

गोष्ठी सभायां संलापे गोष्ठं गोस्थानके मतम्।
ज्येष्ठा लक्ष्म्यग्रजायां स्याद्गृहगोधर्क्षयोर्मता ॥

ज्येष्ठो मासविशेषेऽपि श्रेष्ठे वृद्धे च कल्पितः।
निष्ठा निष्पत्तिनाशान्तयाज्ञानिर्वहणेषु च ॥

प्रष्ठः श्रेष्ठेऽग्रगे[3] चैव स्त्रियां चाण्डालिकौषधौ।
पाठस्तु पठने ख्यातो विद्धकर्ण्यां तु योषिति ॥

पृष्ठं चरमगात्रेऽपि देहस्यावयवान्तरे।
वण्ठः कुन्तायुधे खर्वेऽप्यकृतोद्वाहपूरुषे ॥

शठो मध्यस्थपुरुषे तथा धत्तूरधूर्तयोः।
शोठोऽलसे च मूर्खे च श्रेष्ठो वैश्रवणे वरे ॥

---

१ कोशान्तरे हठशब्द पर्यायौ। २ सुगन्धे, इति मा.। ३ खगे, इति मा.।

षष्ठी कात्यायनीषष्ठ्योस्तथा षष्ठ्यां च पूरणे ।
हठः स्यात्प्रसभे प्रश्न्यां हेठो बाधाविहेठयोः ॥

॥ इति ठद्वितीयम् ॥

---

॥ अथ ठतृतीयम् ॥

अम्बष्ठो देशभेदे च विप्राद्वैश्यासुतेऽपि च ।
स्त्रियां तु स्यादम्बष्ठायां पाठायूथिकयोरपि ॥
अपष्ठुस्तु भवेत्काले वामे[1] स्यादन्यलिङ्गकः ।
कमठः कच्छपे भाण्डभेदे तु कमठं मतम् ॥
कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा दुर्बलाङ्गुलौ ।
जरठः कर्कशे पाण्डौ कठिने त्वभिधेयवत् ॥
नर्मठश्चुबुके षिङ्गे प्रतिष्ठा गौरवे स्थितौ ।
स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः ॥
प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च ।
भूपकक्षान्तरेऽपि स्याल्लघिष्ठो बालकल्पके ॥
वसिष्ठो मुनिभेदे स्याद्वरिष्ठं मरिचे मतम् ।
वरिष्ठः स्याद्गुरुतरे प्रवरे तित्तिरावपि ॥
ताम्रे चाथ मकुष्ठस्तु व्रीहिभेदेऽपि मन्थरे ।
वैकुण्ठः स्याद्विष्णुलोके तथा विष्णौ शतक्रतौ ॥
श्रीकण्ठो [2]देशभिद्युग्मे साधिष्ठोऽतिदृढार्थयोः ।

॥ इति ठतृतीयम् ॥

---

१ बाले, इति मा. ।    २ देव, इति मा. ।

॥ अथ ठचतुर्थम् ॥

कलकण्ठः कलरवे हंसे [1]पारावते पिके ।
कालकण्ठस्तु दात्यूहे कलविङ्के च खञ्जने ॥
तथा स्यात्खण्डपरशौ मयूरे पीतसारके ।
कालपृष्ठं कर्णचापे तथा कोदण्डमात्रके ॥
कालपृष्ठस्तु सारङ्गविशेषे कङ्कपक्षिणि ।
कलविङ्के चित्रपृष्ठो निर्दिष्टः शब्दवेदिभिः ॥
जम्बीरे स्याद्दन्तशठः कपित्थे कर्मरङ्गके ।
नागरङ्गेऽपि चाङ्गेर्यां भवेद्दन्तशठाऽपि[2] च ॥
नीलकण्ठः शिवे [3]केकिदात्यूहे खञ्जनेऽपि च ।
पूतिकाष्ठं तु सरले मतं तद्देवदारुणि ॥
स्तूचकण्ठः खञ्जरीटे कपोते वाडवेऽपि च ।
हारिकण्ठः परभृते हारान्वितगलेऽपि च ॥
क्षीरकण्ठो बालके च तथैव च निरक्षरे ।

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये ठान्तवर्गः ॥

---

॥ अथ डान्तवर्गः ॥

॥ अथ डैकम् ॥

डः पुमान् [4]वाडवाग्नौ स्याड्डाकिन्यामपि च स्त्रियाम् ॥

---

१ पास, इति मा. । २ शठेऽपि, इति मा. ।
३ केके, इति मा. । ४ चाटुवाग्मौ, इति मा. ।

॥ अथ डद्वितीयम् ॥

अडः स्यादुद्यमे त्वण्डं मुष्के पेश्यां नपुंसके ।
ईडा स्तुतौ यज्ञपात्रे नाड्यां च बुधयोषिति ॥

वसुमत्यां सौरभेय्यां वचने चापि कथ्यते ।
काण्डो मदे तु कार्श्ये स्यात्कण्डूः प्रोक्ता तु रुग्भिदि ॥

काण्डं नाले तरुस्कन्धे बाणेऽ[1]वसरनीरयोः ।
कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि गद्यते ॥

क्रीडा केलिप्रकारे च स्यात्खेलाज्ञानयोरपि ।
कुण्डं देवजलाधारे मानभेदेऽग्निकेतने ॥

पतिवत्नीसुते जारात्[2] कुण्डी[3] प्रोक्ता कमण्डलौ ।
क्रोडो मन्दे पुरे क्रोडो न पुमानङ्करक्षसोः ॥

क्रोडः सूकरमातङ्गोः ? क्रोडं क्रोडा च वक्षसि ।
खण्डोऽस्त्री शकले चेक्षुविकारमणिदोषयोः ॥

खण्डी मानान्तरे खेडा रुजायां च निगद्यते ।
खड्गे[4] खेडो निगदितः खोटवच्छब्दवेदिभिः ॥

गडस्तु [5]सेचने गण्डः खड्गिन्यपि निगद्यते ।
वरे[6] योगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च ॥

चिन्हवीरकपोलेषु हयभूषणबुद्बुदे ।
गडुः पृष्ठगुडे कुब्जे गडो मीनान्तराययोः ॥

---

१ वसन, इति मा. । २ कुण्ड इति शेषः । ३ खड्गा, इति मा. ।
४ खङ्गे, इति मा. । ५ सीव, इति मा. । ६ ग्रहे, इति मा. ।

गुडः स्यादिक्षुविकृतौ हस्तिसन्नाहगोलयोः ।
गुडा स्नुह्यां तु गदिता गुलिकायां तु योदिता ॥
गोण्डः पामरजातौ च वृद्धनाभौ च वाच्यवत् ।
चण्डस्तु दैत्यभेदे स्यात्तिन्तिडे यमकिङ्करे ॥
चण्डोऽतिकोपने चण्डी मृडान्यां कोपनस्त्रियाम् ।
चण्डा धनहरीशङ्खपुष्प्योस्तीव्रे तु वाच्यवत् ॥
चूडा शिखायां वलभौ तथा बाहुविभूषणे ।
चोडो देशविशेषे स्यादपि प्रावरणान्तरे ॥
जडो मूर्खे हिमग्रस्ते शूकशिम्ब्यां जडा मता ।
ताडस्तु ताडने घोषे मुष्टिमेयतृणादिषु ॥
ताडी पत्रद्रुमे चाथ मुखे तुण्डमुदीर्यते ।
तूडा तोडा ताडने स्याद्दण्डोऽस्त्री लगुडे पुमान् ॥
व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ।
सैन्ये काले कालमाने चण्डांशोः पारिपार्श्वके ॥
दमे यमेऽभिमाने चोपायभेदे च कीर्त्तितः ।
दण्डो मानार्थको यः स्यात्सविंशतिशताङ्गुलः ॥
व्यूहभेदेऽपि कथितो द्राडो विशरणे मतः ।
ध्राडोऽपि स्याद्विशरणे तृणभेदे नडो मतः ॥
नलवच्छब्दभेदज्ञैर्नाडी नाले व्रणान्तरे ।
शिरायां गण्डदूर्वायां चर्यायां कुहनस्य च ॥
तथा षट्क्षणकालेऽपि नीडं स्थानकुलाययोः ।
पण्डः षण्ढे धियां पण्डा पाण्डुस्तु नृपतौ सिते ॥

पिण्डः सान्द्रे बले बोले गृहाङ्गे जीवनायसोः ।
देहेऽपि च जपापुष्पे निवापे सिल्हकेऽप्यथ ॥
पिण्डी त्वलाबुखर्जूरतगरेषु च कथ्यते ।
पीडा कृपाशिरोमालाऽपमर्दसरलद्रुषु ॥
भाण्डं पात्रेऽश्वभूषायां भूषामात्रे वणिग्धने ।
भण्डः कुशीलवे मण्डः शाकभेदे च मस्तुनि ॥
पञ्चाङ्गुले त्वामलक्यां मण्डा स्यात्सारपिच्छयोः ।
अस्त्रियां, दैत्यभेदे तु मुण्डः स्यान्मुण्डिते त्रिषु ॥
मुण्डा चौषधभेदे स्त्री मुण्डा स्याद्विधवास्त्रियाम् ।
मस्तके त्वस्त्रियां, रण्डा मूषपर्ण्यधवास्त्रियोः ॥
रोडः क्षोभे भवेत्पुंसि तृप्ते स्याद्वाच्यलिङ्गकः ।
वण्डा तु पांशुलायां स्यात्त्रिषु हस्तादिवर्जिते ॥
वण्डो विभागे वाडः स्यादास्रवे, सर्पहिंस्रयोः ।
व्याडः शुण्डा पानगृहहस्तिहस्तसुरासु च ॥
अप्यम्बुहस्तिनीवेश्यास्वपि, शण्डो रुजाविधौ ।
सङ्घाते च भवेच्छाडा श्लाघावचसि योषिति ॥
शैडाऽनादौ भवेच्छौण्डो मदमत्ते च विश्रुते ।
शौण्डी भवेत्तु पिप्पल्यां षण्डं पद्मादिसंहतौ ॥
आह्वाने तु भवेद्धण्डे नाट्योक्तौ स्वसखीं प्रति ।
हुण्डः स्यादथ सङ्घाते हुण्डमावरणे तथा ॥
हरणे च हुडाहूडो गतौ हेडस्त्वनादरे ।
हेडा चाथ गतौ होडा क्ष्वेडः कर्णामयध्वनौ ॥

गरले शङ्करे[१] चापि लोहितार्कफले तथा ।
क्ष्वेडं तु घोषपुष्पे स्यात्तथैव च दुरासदे ॥
क्ष्वेडा वंशशलाकायां सिंहनादे तु योषिति ।
कुटिले वाच्यलिङ्गः [२]स्याद्वंशशल्येऽपि च स्त्रियाम् ॥

॥ इति डद्वितीयम् ॥

---

॥ अथ डतृतीयम् ॥

आमण्डं प्राहुरेरण्डे मण्डवत्तद्विदो जनाः ।
करण्डी मारिकायां स्यात्तस्यां चिच्चपदा यथा ॥
करण्डो मधुकोशासिकारण्डेषु दलाढके ।
कुरण्डोऽपि च दीर्घादिसुरज्येष्ठे च संमतः ॥
तथा निगदिता स्त्री च करण्डोच्चतरा बकाः ? ।
कूष्माण्डो [३]गणभेदेऽपि भ्रूणे कर्कारुकेऽपि च ॥
कूष्माण्डी त्वौषधीगौर्योः कोदण्डो नीवृदन्तरे ।
कार्मुके भ्रुवि, सर्पारौ गरुडो गारुडं पुनः ॥
सर्पमन्त्रे मरकते तरण्डस्त्वाप्लवे मतः ।
बडिशीसूत्रसम्बद्धवस्त्रकाष्ठादिनिर्मिते ॥
नौकायामपि न स्त्री स्याच्चामुण्डा देवतान्तरे ।
तिन्तिडी स्यात्तु चिञ्चायां तथा वृक्षाम्लकेऽपि च ॥
[४]द्राविडः स्याज्जनपदे सङ्ख्याभिद्वेधमुख्ययोः ।
निर्गुण्डी नीलशेफाल्यां सिन्धुवारद्रुमेऽपि च ॥

---

१ कुरले, इति मा. । २ स्यादपौदंष्ट्रप्रकल्पके. इति मा. ।
३ गज, इति मा. । ४ द्रवि, इति मा. ।

प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि ।
प्रकाण्डो विटपे शस्ते मूलशाखान्तरे तरोः[१] ॥

शस्ते पिचिण्ड उदरे पशोरवयवे पुमान् ।
पूत्यण्डः स्यात्पूतिकीटे तथा जन्त्वन्तरेऽपि च ॥

पोगण्डः स्याद्वयोर्भेदे तथा पौगण्ड ईरितः ।
भृशण्ड्यायुधभेदे स्याद्भेरुण्डा देवतान्तरे ॥

तथैव यक्षिणीभेदे वाच्यवत्तु भयानके ।
मारुण्डोऽण्डे भुजङ्गानां मार्गे गोमयमण्डले ॥

मार्तण्डः स्यादुष्णरश्मौ क्रोडेऽपि परिकीर्तितः ।
वरण्डो मुखरोगे स्याद्वरण्डा[२] तु निगद्यते ॥

सारिका [३]वर्त्तिशस्त्रभिद्बहुधेनुषु योषिति ।
वितण्डा व्यर्थवादे स्या[४]त्कच्चीशाके शिलाह्वये ॥

करवीर्यां च कथिता शिखण्डो बर्हचूडयोः ।
शरण्डस्तु पुमान् धूर्ते सरटे भूषणान्तरे ॥

शिखण्डी ना कुक्कुटे[५] स्याज्जाङ्गयारिमयूरयोः ।
सिहुण्डवच्च सेहुण्डो वृक्षभेदे निगद्यते ॥

॥ इति डलतीयम् ॥

---

१ योरिति मा. । २ तण्डा, इति मा. । ३ वालिशस्त्री, इति मा. ।
४ कट्वी, इति मा. । ५ कपाले, इति मा. ।

॥ अथ डचतुर्थम् ॥

अपोगण्डस्तु शिशुके विकलाङ्गेऽतिभीरुके।
गलशुण्डी तु रुग्भेदे गृहनीडो वृषायणे[1] ॥
गौरीपिण्डा रोचनायां गदिता शब्दवेदिभिः।
चक्रवाडस्त्वद्रिभेदे चक्रवाडन्तु मण्डले ॥
जलरण्डो जलावर्ते पयोरेणौ भुजङ्गमे।
[2]देवताडस्तु जीमूते सैंहिकेये हुताशने ॥
उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते।
स्यात्तु वातगुडो[3] वात्यावातशोणितयोरपि ॥
पिच्छलस्फोटिकायां च वामायामपि योषिति।
शब्दविद्भिर्निगदितो हरिमण्डोऽतिमुक्तके ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये डान्तवर्गः ॥

---

॥ अथ ढान्तवर्गः ॥

॥ अथ ढद्वितीयम् ॥

गाढं शुण्ठ्यां क्षुद्रकूपे लवणेऽपि निगद्यते ?।
गूढं रहसि गुह्ये च संवृते पुनरन्यवत् ॥
[4]दाढा स्यादपि दंष्ट्रायामभिलाषे च कीर्त्यते।
दृढः प्रगाढे स्थूले च नितान्ते बलवत्यपि ॥

---

१ ने, इति मा.।  २ जल, इति मा.।
३ खुडा, इति मा.।  ४ क. पु० (द्रा)।

माढिर्दैन्यप्रकाशेऽपि पत्रभङ्गौ[1] च गद्यते ।
मूढः स्यात्तन्द्रिते बाले स्थूणायां मेढिरुच्यते ॥
राढः स्याद्देशभेदेऽपि स्त्रियां स्यात्सूक्ष्मशोभयोः ।
रूढो जाते प्रसिद्धे च बाढं दृढप्रतिज्ञयोः ॥
व्यूढः स्यात्संहतौ चापि विन्यस्ते पृथुलेऽपि च ।
वोढा भारवहे सूते षण्ढः स्यात्पुंसि गोपतौ ॥
आकृष्टाण्डे वर्षवरे[2] तृतीयप्रकृतावपि ।
षोढा तु षट्प्रकारे स्यात् [3]सोढा शक्ते निगद्यते ॥
तितिक्षासंयुते चापि सोढा स्यादभिधेयवत् ।

॥ इति ढद्वितीयम् ॥

---

॥ अथ ढतृतीयम् ॥

अध्यूढा कृतसापत्न्यनार्यामध्यूढ ईश्वरे[4] ।
आषाढो मलये मासे दण्डे च व्रतिनामपि ॥
आषाढात्वृक्षभेदेऽपि विद्वद्भिर्गदिता स्त्रियाम्[5] ।
आषाढी शुचिपूर्णायामालीढं त्वशिते त्रिषु ॥
तथा स्यात्पादविन्यासविशेषे शस्त्रधारिणाम् ।
ऊढे[6] स्थूलेऽप्युदूढः स्यादुपोढो निकटोढयोः ॥
प्रगाढः कृच्छ्रदृढयोः प्रमीढो मूत्रिते घने ।
प्ररूढो जठरे बद्धमूले [7]वारूढ इत्ययम् ॥

---

१ ङ्गे, इति मा. । २ धरे, इति मा. । ३ ख. षो ।
४ त्यामध्यूढस्तु महेश्वरे, इति मा. । ५ ख. पु० पाठः ।
६ रूढे, इति मा. । ७ ख. चा ।

वस्त्राञ्चले पञ्जरेऽग्नौ कपाटे शम्बलेऽपि च ।
विगूढो गर्हिते गुप्ते विरूढोऽङ्कुरिते तथा ॥
जाते[1]ऽपि त्रिषु संरूढः प्रौढेऽप्यङ्कुरिते त्रिषु ।
[2]समूढः पुञ्जिते भुग्ने सद्यो जातेऽनुपप्लुते[3] ॥

॥ इति ढतृतीयम् ॥

---

॥ अथ ढचतुर्थम् ॥

अध्यारूढः समारूढेऽभ्यधिके वाच्यलिङ्गकः ।
प्रत्यालीढस्तु [4]चरणन्यासभेदेऽशिते त्रिषु ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये ढान्तवर्गः ॥

---

॥ अथ णान्तवर्गः ॥

॥ अथ णद्वितीयम् ॥

अणो वारिण्यणुर्व्रीहौ स्याल्लेशे परमाणुके ।
अणिराणिवदक्षाग्रकीले स्याद्[5]श्रिसीमयोः ॥
उष्णः स्यादातपे ग्रीष्मे दक्षे चोष्णा तु मेषजे ।
लोम्नि भ्रूमध्यगावर्त ऊर्णां द्वये निगद्यते ॥
एणो मृगविशेषेऽथ स्यात्कर्णस्तु पृथासुते ।
सुवर्णालौ श्रुतौ चापि कर्णो तु स्यन्दने मतः ॥

---

१ गुप्ते, इति मा. । २ ख. सं । ३ क. प्लुते । ख. ष्णु, इति मा. ।

कणा जीरककुम्भीरमक्षिकापिप्पलीषु च।
कणस्तु धान्याद्यंशे [1]स्यादतिसूक्ष्मे क्वणो रवे॥

क्वाणश्च, विकृताक्षे तु काण इत्यभिधीयते।
कीर्णं छन्नेऽपि विक्षिप्ते हिंसितेऽपि च वाच्यवत्॥

कुणिस्तुन्नकवृक्षे स्याच्छिन्नहस्ते च कुक्कुरे।
कृष्णस्तु वायसे विष्णौ व्यासे भीमानुजेऽपि च॥

मेचके त्वन्यवत्क्लीबे कालायसमरीचयोः।
कृष्णा तु द्रौपदीद्राक्षाकणानीलीनदीष्वपि॥

कोणस्तु लगुडेऽस्रौ च मतो वीणादिवादने।
गृहादीनामेकदेशे वाद्यभेदे च गद्यते॥

गणः समूहे प्रमथे[2] सङ्ख्यासैन्यप्रभेदयोः।
गीर्णं गिलितमात्रेऽपि स्याद्वृतेऽपि च वाच्यवत्॥

गुणोऽप्रधाने रूपादौ सूदे मौर्व्यां वृकोदरे।
सूत्रे सत्त्वादिसन्ध्यादिविद्यादिहरितादिषु॥

[3]शौर्यादौ च तथा त्यागधिषणावृत्तिरज्जुषु।
गुणी गुणानामाधारे द्रव्यमात्रेऽपि वाच्यवत्॥

गेष्णुर्नटे गायने च गोणः शुष्कफले मतः।
गोणी तु वृषवाहिन्यां घ्राणं घ्रातेऽन्यलिङ्गवत्॥

---

१ ख. पु० स्यान्मार्गणे च। २ क. थमे।
३ ख. पु० विद्यादौ, इति मा.।

नासिकेन्द्रिययोः क्लीबं घुणः कीटान्तरे मतः।
घृणा जुगुप्साकृपयोर्घृणी रश्मौ प्रकीर्त्यते॥

पोत्रितुरङ्गयोर्घोणी नासायां तु [1]मता स्त्रियाम्।
चणस्तु हरिमन्थे स्याच्चीर्णं क्लीबे कृते मतम्॥

चूर्णो चोक्ता कपर्देऽपि चूर्णो धूलौ निगद्यते।
क्षारभेदे, च चूर्णं स्यात्सुवासयुक्तिके तथा॥

[2]जर्णश्चन्द्रे तरुभिदि जिष्णुरर्जुनशक्रयोः।
जित्वरे चाथ जीर्णं तु परिपक्वपुराणयोः॥

जूर्णो धान्यविशेषे स्याज्भाणिः क्रमुकभिद्यपि।
तर्णः पोते परित्राणे त्राणः स्याद्रक्षितेऽपि च॥

त्राणं तु त्रायमाणायां ताणं तृणमये मतम्।
तीर्णः[3] स्यात्तु समुत्तीर्णे नद्यादौ वाच्यलिङ्गवत्॥

तीक्ष्णं सामुद्रलवणे तिग्मात्मत्यागिनोरपि[4]।
तीक्ष्णो यवाग्रजे क्लीबं विषलोहाजिमुष्कके॥

तूणी नील्यां निषङ्गे ना तूर्णं तु त्वरितेऽव्ययम्।
तृष्णा [5]तर्षलिप्सयोः स्यात्तृणं तु यवसे मतम्॥

[6]दीर्णं तु [7]दारिते भीते द्रुणं चापे निगद्यते।
तथा मतोऽलिनि द्रुणो [8]द्रोणीकच्छपयोर्द्रुणी॥

---

१ घोणा, इति शेषः। २ ख. जु। ३ ख. र्णं।
४ त्रिष्विति शेषः। ५ ख. तर्षलिप। ६ ख. ती।
७ ख. ता। ८ द्रोणीकच्छप्योरिति न्याय्यम्।

द्रेष्णुस्तु दुर्दमे[1] दातर्य्यपि द्रोणः कृपीपतौ ।
द्रोणश्च मानभेदेऽपि कृष्णकाके स्थलान्तरे ॥
स्त्रियां काष्ठाम्बुवाहिन्यां गवादन्यामपीरितः ।
धृष्णुर्धृष्टे निगदितो नेष्णु ? नेतरि कीर्त्तितः ॥
पर्णं पक्षे पलाशेऽपि [2]पर्णः स्यात्किंशुकद्रुमे ।
पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे ॥
[3]क्रय्यशाकादिके द्यूतव्यवहारे भृतौ धने ।
पार्ष्णिस्तु पादावयवे सैन्यपृष्ठोन्मदस्त्रियोः ॥
प्राणोऽनिले बले बोले हृन्मरुत्काव्यजीवयोः ।
पुंभूम्नि वाऽसुषु प्राणाः पूरिते वाच्यलिङ्गकः ॥
प्राणी तु चेतने प्रोक्तः करे पाणिर्निगद्यते ।
प्राह्णो दिनस्यादिभागे तृतीयांशेऽपराह्णवत् ॥
पूर्णः शक्ते[4] समग्रे च पूरिते त्वभिधेयवत् ।
फणा फटे फणी सर्पे फाणिर्गुडकरम्बयोः ॥
डिण्डीरे तु भवेत्फेणो बाणः कृष्णकुरण्टके ।
बाणः[5] स्याद्गोस्तने दैत्यविशेषे केवलेऽपि च ॥
सायके मूर्त्तिभेदे च झिण्ट्यां बाणा निगद्यते ।
बाणा च बाणमूलेऽपि नदीभेदे च गद्यते ॥
भाणो नाटकभेदे स्याद्भ्रूष्णुर्भवितरि स्मृतः ।
स्याद्गर्भडिम्भयोर्भ्रूणो मणिर्मुक्ताश्मजातिषु ॥

---

१ र्गमे. इति मा. । २ ख. र्णा । ३ ख. क्रेय ।
४ ब्दे, इति मा. । ५ ख र्णा ।

माणिः [1]पञ्चशिरायां स्यात्स्त्रियां विबुधसंमता ।
मोणः [2]शुष्कफले नक्रमक्षिकाऽहिकरण्डयोः[3] ॥
रणः कोणे क्वणे पुंसि समरे पुन्नपुंसकम् ।
रीणं स्रुते तु रुग्णं स्याद्भग्ने रेणुस्तु पर्पटे ॥
धूलौ पुष्पपरागे च लोणी स्यादौषधान्तरे ।
व्रणः क्षते निगदितो वर्णो विप्रादिषु स्मृतः ॥
शुक्लादौ च मतो वर्णो यशोगुणकथासु च ।
स्तुतौ ना न स्त्रियां रूपभेदाक्षरविलेपने[4] ॥
ब्रह्मचारिणि वर्णी स्याल्लेखने चित्रकारके ।
वाणिर्व्यूतौ निगदिता वाणिर्मूल्ये बलाहके ॥
वाणी स्याच्छ्रुतिभारत्योर्विष्णुर्व्यापकशार्ङ्गिणोः ।
वल्लक्यां विद्युति तथा वीणा निगदिता बुधैः ॥
वृष्णिर्नृपान्तरे प्रोक्तस्तथा पाखण्ड(चण्ड?)योः ।
वृक्णं छिन्ने निगदितं वेणिर्नद्यन्तरे स्त्रियाम् ॥
वेणी केशस्य बन्धे स्यान्नद्यां देशान्तरेऽपि च ।
देवताडे[5] च वेणुस्तु त्वक्सारे च नृपान्तरे ॥
शणस्त्वक्सारके प्रोक्तः श्राणं पक्वे[6]ऽप्युदीरितम् ।
श्राणा तु स्याद्यवाग्वां स्त्री शाणी माषचतुष्टये ॥
लोहादीनां च निकषे शाणी प्रावरणान्तरे ।
शीर्णं क्लिन्ने मतं शिल्पिसंहतौ श्रेणिरुच्यते ॥

---

१ ख य । २ ख. शुक्ल भवे । ३ ख. भ्रयोः ।
४ पोषणे, इति मा. । ५ ते, इति मा. । ६ क. क्के ।

[१]पङ्क्तौ तथा सेकपात्रे प्रवदन्ति मनीषिणः ।
समानार्थे च शोणस्तु कृशानौ श्योनकेऽपि च ॥
लोहिताश्वे नदे कोकनदच्छाये तु वाच्यवत् ।
श्रोणः पङ्क्तौ स्मृतः श्रोणी कथिताऽवयवान्तरे ॥
स्थाणुर्ध्रुवे हरे कीले स्थिरे स्थाष्णुरपीष्यते ।
स्थूणा स्तम्भे लोहमूर्तावङ्कुशे तु सृणिर्मता[२] ॥
[३]लज्जावति ह्रीण इति गदितः शब्दवेदिभिः ।
ह्रीणं ह्रीते वाच्यवत्स्याद् हूणो देशान्तरे मतः ॥
क्षणः पर्वोत्सवे काले निर्व्यापार[४]स्थितावपि ।
[५]क्षीणस्तु ह्रासमापन्ने क्षुणं स्यान्निश्चयार्थके ॥
क्षोणी धरण्यां निर्दिष्टा पूजायामर्हणं मता ।

॥ इति णद्वितीयम ॥

---

॥ अथ णतृतीयम् ॥

अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि ।
अरुणः कुष्ठभेदे ना सन्ध्या[६]रागेऽर्कसारथौ ॥
अरुणो[७]ऽव्यक्तरागेऽर्के कपिले गुणिनि त्रिषु ।
स्त्रियां त्वतिविषाश्यामामञ्जिष्ठात्रिवृतासु[८] च ॥

१ ख. पु. इदमधिकम् ।
२ तः, इति मा. ।
३ ख. पु. इदं नास्ति ।
४ क. स्तुता, ख. स्थिरा. इति मा. ।
५ ख. पु. इदं नास्ति ।
६ ख. सारे ।
७ णे, इति मा. ।
८ ख. विदासु ।

अभीक्ष्णं तु भृशे नित्ये तद्युक्तक्रिययोस्त्रिषु।
अवर्णः स्यादथाक्षेपे निर्दये त्वघृणो मतः॥

अपर्णा स्यात्तु दुर्गायामन्तणस्त्वृणनिर्गते[1]।
अभ्यर्णं स्यात्सन्निहिते त्वकर्णः क्ष्वेड ईरितः॥

पूर्णेतरे त्वपूर्णं स्यात्पण्यवीथ्यां तथाऽऽपणः।
आपणस्तु निषद्यायामाकीर्णं सङ्कुले मतम्॥

आर्याणी स्यादथार्यायामिच्छायामीषणा मता।
इन्द्राणी करणे स्त्रीणां पौलोमीसिन्दुवारयोः॥

ईरिणं तूषरे शून्ये [2]त्विरिणं चापि गद्यते।
ईक्षणं दर्शने दृष्टावङ्कनेऽपि निगद्यते॥

उरणस्तु भवेन्मेढ्रे मरीचे तूषणं मतम्।
ऊषणा तु कणायां स्यादूक्षणं प्रोक्षणे मतम्॥

ऊहणः काष्ठभेदे स्यादुद्रेके तूल्वणं मतम्।
अथो मार्गानुसारिण्यामेषणी च तुलाभिदि॥

कवोष्णमिषदुष्णे स्यात्कदुष्णं च निगद्यते।
करुणा तु कृपायां स्याद्रसपादपयोः पुमान्॥

कत्तृणं तृण[3]भित्प्रश्न्योः करणं हेतुकर्मणोः।
बालवादौ हस्तलेपे[4] नृत्यगीतप्रभेदयोः॥

क्रियाभेदेन्द्रियक्षेत्रकायसंवेशनेषु च।
कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते॥

---

१ ख. र्णतौ। २ ख. त्व।
३ भत्स, इति मा.। ४ हले स्तेये, इति मा.।

कल्याणं मङ्गले स्वर्गेऽक्षये गौर्यां तु योषिति ।
कङ्कणं हस्तवलये सूत्रमण्डन[1]योरपि ॥
करेणुर्गजयोषायां स्त्रियां ना तु मतङ्गजे ।
अतिक्रमे स्यात्क्रमणं कर्षणं त्वपकर्षणे ॥
करिणी जातिभेदे स्यात्करणिः पादपान्तरे ।
कार्मणं कर्मठे क्लीबे मन्त्रतन्त्रादियोजने ॥
कारणं तु मतं हेतुवधयोः[2] करणेऽपि च ।
स्त्री यातनायां किरणो गभस्तौ किरणं पुनः ॥
क्लीबं विकिरणे, भृत्ये कुर्वाणोऽपि च कारके ।
स्त्रियां कृपाणी कर्तर्यां खड्गे निगदितः पुमान् ॥
क्रकणः क्रकरे ख्यातः कृपणो द्रव्यलम्पटे[3] ।
खरणाः खरनासे स्यात्खुरणाः खुरनासिके ॥
गर्हणा स्यात्तु निन्दायां गर्भवत्यां तु गर्भिणी ।
ग्रहणं तूपलब्धौ स्यादादरे च तथा करे ॥
ग्रहोपराग[4]स्वीकारबन्दिष्वपि निगद्यते ।
उद्गाहे[5] गरणं प्राहुर्गार्भिणं गर्भसम्भवे ॥
गृहिणी तु भवेत्पत्न्यां ग्रहणी तु गदान्तरे ।
ग्रामणी[6]र्भौगिके पत्यौ प्रधाने नापितेऽपि च ॥
ग्रामीणा नीलिकायां स्याद्ग्रामोद्भूते तु वाच्यवत् ।
स्याद्गुर्विणी तु गर्भिण्यां गूरणं तूद्यमे मतम् ॥

---

१ ख. ल। २ बन्ध्ययोरिति मा.। ३ ख. टौ।
४ क. कार। ५ निगारे, इत्यमरः। ६ ख. भो।

गोकर्णस्तु मृगे सर्पेऽश्वतरे च गणान्तरे ।
अङ्गुष्ठानामिकोन्माने मूर्विकायां तु योषिति ॥
गुरणं स्यादुद्यमने घृष्टौ घरणमुच्यते ।
उच्चैर्घुष्टे घोषणा[1] स्याद्घोषणस्तूच्चभाषिणि ॥
चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च ।
भ्रमणाशनयोः[2] क्लीबं चर्वणं भक्षणे मतम् ॥
कुशीलवे चारणः स्यात्तथा च स्तुतिपाठके ।
चिक्कणं स्यात्तु मसृणे जरणं हिङ्गुनि स्मृतम् ॥
जरणं जीरकेऽपि स्यात्कृष्णे सौवर्चलेऽपि च ।
जृम्भणं स्यात्तु जृम्भायां [3]डयनं तु रथे स्मृतम् ॥
तरणिः [4]सागरे सूर्ये कुमारीनौकयोः स्त्रियाम्
[5]निम्नतायां च तरणिर्नौकायामपि तारणिः ॥
तरुणो रुबुके[6] यूनि तरुणं [7]कुब्जपुष्पके ।
तर्पणं प्रीणने प्रोक्तं चिञ्चायां तिन्तिणी मता ॥
तोरणं द्वारबन्धे स्यात्तोरणः पादपान्तरे ।
दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु ॥
अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम् ।
द्रविणं न द्वयोर्वित्ते[8] काञ्चने च पराक्रमे ॥
दद्रुणो दद्रुरोगार्ते दारणं तु विदारणे ।
दारुणं भीषणेऽपि स्याद्दारुणस्तु रसान्तरे ॥

---

१ खगां । २ दरयोरिति मा. । ३ इदं न तृतीये युक्तम् ।
४ क. द्युमणौ पुंसि । ५ ख पु. पादद्वयम् । ६ चके, इति मा. ।
७ ख. फुल्ल । ८ वृत्ते, इति मा. ।

दुर्वर्णं तु भवेद्रौप्ये द्युमणिस्तिग्मदीधितौ ।
द्रुघणो मुद्गरेऽपि स्याद्द्रुहिणोऽपि परश्वधे ॥
हिरण्यगर्भे द्रुहिणो दौर्गीणं दुर्गसंभवे ।
दूर्वारसे तु दौर्वीणं [1]मृष्टपर्णेऽपि तन्मतम् ॥
धर्मणस्तु मतो वृक्षसर्पयोर्धरणं पुनः ।
मानभेदेऽथ धरणी भुवि बन्धे तु धर्षणा ॥
धर्षणं तु रतेऽसत्यां धर्षणीति निगद्यते ।
धर्मिणी गदिता सत्यां स्वर्लोके [2]धरुणः पुमान् ॥
परमेष्ठिनि नीरे च धारणा योगभिद्यपि ।
धारणी तु भवेन्नाड्यां बुद्धमन्त्रेऽपि कुत्रचित्[3] ॥
धिषणस्त्रिदशाचार्ये प्रज्ञायामपि योषिति ।
धुरीणः स्यात्तु निपुणे वरेण्येऽपि निगद्यते ॥
निःश्रेणिरधिरोहिण्यां खर्जूरीपादपेऽपि च ।
निर्याणं वारणापाङ्गे तथा मोक्षेऽध्वनिर्गमे ॥
निर्माणं निर्मितौ सारे तथैव स्यात्समञ्जसे ।
निर्वाणं निर्वृतौ मोक्षेऽस्तंगमे[4] गजमज्जने ॥
निद्राणः स्यात्तु शयिते निष्प्राणः स्याद्गतासुनि ।
निपुणः स्यादभिज्ञेऽथ निद्राणः शयिते मतः ॥
अश्वासने स्यात्पल्याणं प्रयाणं तोकने[5] गतौ ।
प्रवणस्तु भवेत्प्रह्वो[6]दरयोश्च चतुष्पथे ॥

---

१ क. मि । २ ख. धर । ३ ख. भमज्जने ।
४ संगमे, इति मा. । ५ ख. डने । ६ क. दा. ख. द्वा, इति मा. ।

क्रमनिम्नमहीभागे प्रमाणं मध्यवर्तिनि ।
तथैव नित्यमर्यादाशास्त्रेषु च प्रमातरि ॥
इयत्तायां च हेतौ च प्रभूष्णुः शक्तिमत्यपि ।
प्रवेणिस्तु कुथे वेण्यां प्रवीणो निपुणे नरि ॥
पक्षिणी स्यात्पूर्णिमायां विहग्यां शाकिनीभिदि ।
आगामिवर्तमानाहर्युक्तराचावपीष्यते ॥
पचोर्णं धौतकौशेये पचोर्णः शोणके मतः ।
पादत्राणे तु पत्त्राणं भवेत्प्राणहिताय च ॥
शराणां पत्ररचने पत्रणा[1] परिकीर्तिता ।
प्रघणस्ताम्रकलशे प्रघाणश्च निगद्यते ॥
पक्कणः शबरावासे त्वागन्ता प्राघुणो मतः ।
पाषाणः स्यात्तु दृषदि पुराणं पञ्चलक्षणे ॥
पणे पुंसि त्रिषु प्रत्ने पूरणः पूरके त्रिषु ।
पिष्टभेदे पूरणं स्याच्छाल्मल्यां पूरणी स्त्रियाम् ॥
[2]पटारम्भकसूत्रेषु, व्यादेशे प्रेषणं मतम् ।
प्रोक्षणं सेचने चापि वधे[3] यज्ञार्थके पशोः ॥
ब्रह्माणी स्याच्छक्तिभेदे बर्हिणस्तु शिखण्डिनि ।
ब्राह्मणं ब्रह्मसङ्घाते वेदभागे पुमान् द्विजे ॥
बार्हिणं [4]बर्हिणस्येदमित्यर्थे ब्राह्मणी पुनः ।
ब्राह्मणस्य च योषायां[5] ब्राह्मणी चौषधान्तरे ॥

---

१ ख. त्राणः ।  २ क. पदा ।  ३ ख. बन्धे ।
४ ख. बा  ५ ख. स्वधर्मिण्यां ।

[1]बृंहणं पुष्टिकरणे भरणी त्वृक्षघोषयोः ।
भृतिवेतनयोः क्लीबे क्रीडायां भ्रमणी मता ॥
तथा कारण्डिकायां च क्लीबे तु गमनान्तरे ।
मधुव्रते तु भ्रमणो भविष्णुर्भविता समौ ॥
भीषणो रसभेदे स्याच्छल्लक्यां भीषणा मता ।
दारुणे[2] तु यथालिङ्गं भूस्तृणं तु तृणान्तरे ॥
भूषणं स्यादलङ्कारे मसृणोऽकर्कशे मतः ।
स्निग्धेऽपि च तथोमायामुद्दंशे [3]मत्कुणो मतः ॥
तथैव निर्विषाणेभे निश्श्मश्रुणि च पूरुषे ।
मत्कुणो नारिकेलेऽपि मन्दोष्णं तु कदुष्णके ॥
मार्गणो याचकेऽपि स्यात्तथैव च शिलीमुखे ।
क्लीबं याच्ञान्वेषणयोर्यन्त्रणं [4]रक्षणे स्मृतम् ॥
तथा नियमने बन्धे रवणः शब्दने खरे ।
रमणं तु पटोले स्याद्भवे ना रमणी स्त्रियाम् ॥
अथावने रक्षणं स्याद्रञ्जणो[5] ? भाजनान्तरे ।
रावणः स्याद्दशास्येऽपि रामणं रमणस्य यत् ॥
रिङ्खणं रिङ्गणं चापि स्खलने परिकीर्तितम् ।
अस्नेहने रूक्षणं [6]स्याद्रूपणं प्रोञ्छने मतम् ॥
रेषणः काशमर्दे तु गदितः शब्दवेदिभिः ।
रोषणः[7] पारदे हेमघर्षणोप[8]रयोरपि ॥

---

१ क. बृ, ख ब्रह्म, इति मा. । २ ख. णे । ३ ख. मद्गु ।
४ ख. ल । ५ ख. नो । ६ ख. स्याद्दूष ।
७ शाणः, इति विश्वः । ८ णोश्म, इति मा. ।

क्रोधने स्याद्वाच्यलिङ्गः स्याद्रोचिष्णुस्तु दीप्तिमान्[1] ।
रोहिणी कण्ठरोगे[2] स्याद्वृक्षभेदेऽपि गद्यते ॥
रोहिणश्चन्दनद्रौ च गदितः शब्दवेदिभिः ।
लवणं सैन्धवादौ ना सिन्धुरक्षोभिदो रसे ॥
तद्युक्ते वाच्यलिङ्गः स्यान्नदीभेदत्विषोः[3] स्त्रियाम् ।
लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित् ॥
लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति ।
रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयवत् ॥
जङ्घाचारो वङ्क्षणः स्याद्देहावयवभिद्यपि ।
वरुणस्तरुभेदेऽप्सु पश्चिमाशाधिपेऽपि च ॥
वरणस्तिक्तशाके ना वरणा तु नदीभिदि ।
क्लीबं कन्यादिवरणे वेष्टने च निगद्यते ॥
वरुणस्तु भवेत्सेतौ सालेऽपि च निगद्यते ।
वर्चिष्णुर्वर्चसा युक्ते वर्तिष्णुर्वर्तने मतः ॥
वर्द्धिष्णुर्वर्धके प्रोक्तस्तरःसन्धौ तु [4]वङ्क्षणम् ।
वर्षणं तु भवेद्वृष्टावाशाभेदे तु वारुणी ॥
वारणं प्रतिषेधे ना वारणस्तु मतङ्गजे ।
विषाणी क्षीरकाकोल्यामजशृङ्ग्यां च योषिति ॥
कुष्ठानामौषधे क्लीबं [5]पशुशृङ्गेभदन्तयोः ।
विपणिः पण्यवीथ्यां च भवेदापणपण्ययोः ॥

---

१ इत आरभ्य हरिणी हरितायां चेत्यन्तः ख पुस्तक पाठो नास्ति ।
२ कर्णरोगे, इति विश्वः ।
३ द्विषोरिति मा. ।
४ लिङ्गभेदात्पुनः पाठः ।
५ त्रिषु, इति मा. ।

विवर्णः पामरे प्रोक्तो विकर्णः कौरवानुजे ।
वीक्षणं नयने प्रोक्तं वीक्षणं चावलोकने ॥
वीरणं तृणभेदेऽपि तथाऽण्डे वृषणो मतः ।
शरणं गृहरक्षित्रोर्वधरक्षणयोरपि ॥
श्रवणमृक्षभेदे स्याच्छ्रुतौ कर्णे च गद्यते ।
श्रमणो यतिभेदे ना [1]निन्द्यजीविनि च त्रिषु ॥
स्त्रियां सुदर्शनामांस्योर्मुण्डीरीशबरीभिदोः ।
श्रयण्यङ्गारधान्यां स्याच्छ्रोर्णी श्लश्लोम्नि च ॥
श्रपणं तु भवेत्पाके श्रामणस्य . . . . . वत् । ?
श्रावणं श्रोत्रविषये शिक्षणं शासने मतम् ॥
श्रीपर्णं कमलेऽपि स्यादग्निमन्थे मतः पुमान् ।
श्रावणो मासि पाषण्डे दध्याल्यां श्रावणा स्त्रियाम् ॥
भवेच्छ्रीपर्णी काश्मर्यां सहिष्णुः सहने मतः ।
शृङ्गिणी तु भवेद्धेन्वां शोषणं तु विशोषणे ॥
सरणी स्यात्प्रसारिण्यां सप्तार्णस्तरुभिद्यपि ।
सरणिः पद्धतौ पङ्क्तौ सारणो राक्षसान्तरे ॥
रुग्भेदे ना स्वल्पनद्यां प्रसारण्यां च सारिणी ।
सिङ्घाणं काचपात्रे स्याल्लोहनासिकयोर्मले ॥
सुपर्णः स्यात्स्वर्णचूडे गरुडे कृतमालके ।
जनन्यां वैनतेयस्य कमलिन्यां च योषिति ॥
सुषेणो विष्णुसुग्रीववैद्ययोः करमर्दके ।
सुवर्णो ना स्वर्णकर्षे सुवर्णश्च[2] मखान्तरे ॥

---

१ नित्य, इति मा. । २ र्णा च, इति मा. ।

स्त्री कृष्णागुरुणि क्लीबे काञ्चने हरिचन्दने ।
हरणं कन्दभेदे स्यात् स्वक्षिण्यवयवान्तरे ॥
स्वैरिणी व्यभिचारिण्यां हरणं चोरकर्मणि ।
हरेणुर्ना सतीने स्त्री रेणुकाकुलयोषितोः ॥
हर्षणो योगभेदे च हर्षणोऽक्षिरुगन्तरे ।
हर्मणिः ? स्याद्गृहगते हरणं प्रापणे मतम् ॥
हरिणी हरितायां च नारिभिद्वृत्तभेदयोः ।
सुवर्णप्रतिमायां च सारङ्गे हरिणो मतः ॥
विशदे वाच्यलिङ्गः स्याद्वराटे स्वर्णचेतसोः (?) ।
क्लीबेऽथ क्षपणो बौद्धे क्षपणं कालयापने ॥
क्षमणं सहने क्षेपण्युच्यते स्व्यायुधान्तरे ।
क्षेपणं प्रेरणे नौकादण्डजालभिदोः स्त्रियाम् ॥

॥ इति णतृतीयम् ॥

---

॥ अथ णचतुर्थम् ॥

अमर्षणः स्यात्कोपिष्ठे व्यस्ते त्वप्रगुणं मतम् ।
अन्तर्वाणिः शास्त्रविदि त्ववदीर्णं द्रुते मतम् ॥
[1]धिक्कृते त्वधरीणः स्यादवकीर्णी क्षतव्रते ।
अक्षौहिणी सैन्यमानेऽङ्घ्रिपर्णी त्वौषधान्तरे ॥
अभाषणं तु मौने स्याद्धर्मशून्ये त्वधर्मणः ।
अर्कपर्णस्तु मन्दारेऽन्वेषणा तु गवेषणे ॥

---

१ अधरीणस्त्वधिक्कृतेऽवकीर्णी तु क्षतव्रते । इति मा. ।

अवहेले[1]ऽलक्षणं च स्फुलिङ्गेऽग्निकणो मतः ।
अङ्गारिणी हसन्त्यां स्याद्भास्करत्यक्तदिश्यपि ॥

[2]आथर्वणिरथर्वज्ञे ब्राह्मणे च पुरोहिते ।
[3]अवदीर्णं दारिते चाध्येषणा तु गवेषणा ॥

ऋणग्रहीता च[4] मतस्त्वधमर्णो मनीषिभिः ।
आभाषणं स्यादालापे मता साऽऽक्षारणा च या ॥

आक्रोशो[5] मैथुनार्थः[6] स्यादिति शब्दविदां मतम् ।
अथाचार्यस्य भार्यायामाचार्यानीति[7] गद्यते ॥

आधोरणो हस्तिपके वृतावावरणं स्मृतम् ।
आतर्पणं प्रीणने स्यान्मङ्गलालेपनेऽपि च ॥

आरोहणं तु सोपाने समारोहे प्ररोहणे ।
उत्क्षेपणं तु व्यजने धान्यसंस्कारसाधने ॥

उद्धरणं समुद्धारवान्तान्नोन्मूलनेष्वपि ।
उन्मादिन्युन्मदिष्णुः स्यादुत्तमर्णो धनप्रदे ॥

उद्धरत्युद्धरिष्णुः स्यादुत्पतत्युत्पतिष्णु च ।
एलापर्णी वृक्षभेदे माने कार्षापणो मतः ॥

[8]टिट्टिभे[9] तु कटुक्वाणो गदितः पण्डितोत्तमैः ।
अथ कामगुणो रागे विषयाभोगयोरपि ॥

---

१ क. लेहे । २ ख. अ । ३ अर्थभेदात्पुनः पाठः ।
४ तरि, इति मा. । ५ ख. प्रो । ६ ख. र्थे ।
७ णीति, इति मा. । ८ ख. पु. अधिकः पाठः ।
९ ढिढिते, इति मा. ।

क्षेत्रे तु कोद्रवाणां स्यात्कौद्रवीणमिति स्थितिः ।
खरपर्णी लताभेदे गदिता गुणवत्तरैः ॥
गवेषणी ग्रन्थिपर्णी गिरिकर्ण्यपि चौषधे ।
गोदारणं लाङ्गले स्याच्चतुष्पर्णी लतान्तरे ॥
चीर्णपर्णस्तु निम्बे स्यात्खर्जूरीपादपेऽपि च ।
चूडामणिः काकचिञ्चाफलेऽपि च शिरोमणौ ॥
जुहुराणो[1]ऽपि चाध्वर्यौ तथा स्याज्जातवेदसि ।
तण्डुरीणः कीटमात्रे बर्बरे तण्डुलोदके ॥
त्रायमाणं रक्ष्यमाणे त्रायमाणा तु वार्षिके ।
तालपर्ण्यौषधभिदि तिलपर्ण्यपि गद्यते ॥
तुरायणं तु साकल्ये तैलपर्णी तु सिल्हके ।
श्रीवासे स्यान्मलयजे, गौर्यां दाक्षायणी मता ॥
दाक्षायण्योऽश्विनीत्यादितारासु गदिता बुधैः ।
सूर्ये दिनमणिः प्रोक्तस्तथैव च दिनप्रणीः ॥
अथ देवमणिर्भर्गेऽश्वावर्ते कौस्तुभेऽपि च ।
नारायणी गौर्यभीर्वोः[2] पुंसि स्याद्गरुडध्वजे ॥
गले[3] निगरणः, क्लीबे भोजनेऽपि निगद्यते ।
स्यात्तु निःसरणं पापमृत्युमोक्षेषु निर्गमे ॥
उपाये स्यान्निस्तरणं निस्तारे तरणेऽपि च ।
निदर्शने विचारे च स्यादालोके निरूपणम् ॥

---

१ वाणो, इति मा. । २ भीरुगौर्योरिति मा. ।
३ कुले, इति मा. ।

[1]निर्वपणं निवापे स्यात्तथा निर्वापणं मतम् ।
पर्वरीणस्तु पर्णस्य शिरायां [2]द्यूतकम्बले ॥
पर्णवृन्तरसेऽपि स्यात्पर्वरीणं तु पर्वणि ।
आयुधे तु प्रहरणं प्रहारे हरणेऽपि च ॥
प्रमापणं संशमने रथे प्रवहणं मतम् ।
परीरणस्तु कमठे [3]दण्डे च पट्टशाटके ॥
परायणमभीष्टे स्यात्तत्पराश्रययोरपि ।
परवाणिः[4] पुमान् धर्माध्यक्षवत्सरयोरपि ॥
परीक्षणं शोधने स्याल्लताभेदे प्रधर्षिणी ।
प्रसारिणी च गदिता तथा प्रस्रवणं स्रुतौ ॥
प्रवारणं निषेधे स्यात्काम्यदाने च न द्वयोः ।
प्रत्यक्श्रेणी तथा प्रत्यक्पर्णी स्यादौषधान्तरे ॥
स्यादावृतौ प्रावरणं मतं दाने प्रचारणम् ।
प्रतारणं तारणे स्यादपि मिथ्याभिभाषणे ॥
परायणं समासङ्गे कार्त्स्न्ये पारङ्गतावपि ।
स्याच्छ्मशाने पितृवणं पीतवर्णं तु काञ्चने ॥
पीलुपर्णी तु [5]बिम्बायां मूर्वायाञ्चाभिधीयते ।
अथ पुष्करिणी नद्यां सरोजिन्यां जलाशये ॥
पृश्निपर्णीपृथक्पर्ण्यौ सम्मतावौषधान्तरे ।
मतं बालतृणं शष्पे भद्रपर्णी मतौषधे ॥

---

१ क. निर्वा । २ द्य, इति मा. । ३ च, इति मा. ।
४ रायणिरिति मा. । ५ चिञ्चा, इति मा. ।

मधुपर्णी तु [1]गाम्भार्यां नील्लीसंज्ञौषधेऽपि च ।
महारसे मधुतृणमसिपचवदीरितम् ॥
[2]माषपर्ण्यौषधिभिदि मीनाम्नीणस्तु दर्दुरे ।
खञ्जने, मृगतृष्णा तु या प्रसिद्धा मरीचिका ॥
सिन्दूरे रक्तरेणुः स्यात्पालाशकुसुमेऽपि च ।
रागचूर्णः स्मरे दन्तधावने पटरञ्जके ॥
रेरिहाणः पुमान् गौरीपतावप्यम्बरेऽपि च ।
लम्बकर्णः स्मृतोऽङ्कोटपादपे छगले[3]ऽपि च ॥
विदारणं [4]विडम्बे च हले भेदे रणे द्वयोः ।
विसर्पणं प्रसरणे तरुभेदे विकीरणः ॥
प्रसारणे विकिरणं चर्चायां तु विचारणा ।
वीरयागं[5] तु यद्योधैः पीयते सङ्गरे मधु ॥
[6]प्रेतनद्यां वैतरणी प्रेतानां यातुमातरि ।
शरवाणिः शरमुखे पायिके[7] शरजीविनि ॥
[8]शालिपर्ण्यौषधीभेदे शम्बदीर्णस्तु[9] पर्वते ।
अथो शिखरिणी प्रोक्ता रसालावृत्तभेदयोः ॥
नारीरत्ने मल्लिकायां रोमावल्या[10]मपि स्त्रियाम् ।
घण्टापथे संसरणमसम्बाध[11]चमूगतौ ॥

---

१ क. ग, ख. क ।  २ ख. माघ ।  ३ ख. कले ।
४ ख. विट ।  ५ ख. पाठं ।
६ प्रेधा, इति मा. ।  ७ यायिके, इति मा. ।
८ ख. पु. इतःप्राक् रीयानकस्तु ररटे प्रतिसूर्याय, इति पाठोऽपूर्णः कचतुर्थस्य ।
९ ख. रीर्णस्तु ।  १० धान्या, इति मा. ।  ११ ख. धा ।

संसारे च वरारामे[1] निर्गमेऽपि च गद्यते ।
[2]रणारम्भे संसरणं गोपुरे पुरनिर्गमे ॥
समीरणस्तु पवने पथिके च फणिज्झके ।
संवीक्षणं विचयने कथितं तत्त्ववेदिभिः ॥
सुनिषण्णं[3] शाकभेदे सुतश्रेणी तु वीरुधि ।
हस्तिकर्णस्तुरुबूके[4] पलाशगण[5]भेदयोः ॥

॥ इति णचतुर्थम् ॥

---

अथ णपञ्चमम् ।

अनादरेऽवग्रहणं प्रतिरोधे च गद्यते ।
लिपिज्ञे त्वक्षरचणः कृच्छ्रादौ चाघमर्षणम् ॥
याचायामभिनिर्याणं निःश्रेण्यामधिरोहिणी ।
शूद्रे त्ववरवर्णः स्यादायुषि त्वसुधारणम् ॥
रिपुपक्षेऽभ्यमित्रीणः खनित्रे त्ववदारणम् ।
अनुकर्षणं तु चषके चौर्ये स्यादपहारणम् ॥
अवतारणं च भूतादिग्रहे वस्त्राञ्चलेऽर्चने ।
मण्डनेऽलङ्करिष्णुः स्यान्निर्हारेऽप्यवकर्षणम् ॥
कर्मक्षमेऽलङ्कर्मीणोऽपचपिष्णुस्त्रपावति ।
गदितः शब्दभेदज्ञैर्मञ्जुन्याहितलक्षणा ॥

---

१ रम्भे, इति मा. । २ इदं संवीक्षणशब्दादनन्तरमासीत् ।
३ ख. सुनिषण्णः । ४ क. ख. स्तुरुचके, इति मा. ।
५ द्रुम, इति मा. ।

अथेन्द्रवारुणी [1]वीरुद्भेदे निगदिता बुधैः ।
स्यादुपाकरणं यज्ञे पशोः संस्कारकर्मणि ॥
दधिवारे[2] निगदितः करघर्षण इत्ययम् ।
[3]श्रीपर्णसंज्ञकतरौ मताऽस्ति गणिकारिका ॥
ज्योतिरिङ्गण इत्युक्तः खद्योते शब्दवेदिभिः ।
यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ॥
पद्मचारिणी रमायां पादग्रहणं नतावुक्तम् ।
प्रविदारणं प्रयुक्तं विदारणे सम्पराये च ॥
चर्मिणि फलकपाणिः, प्रभिन्नकटकुञ्जरे नु पुनः ।
मत्तवारण इति गदितः प्रग्रीवे च व्यवस्थया विज्ञैः ॥
मण्डूकपर्णी मञ्जिष्ठाब्राह्मण्योर्ना तु शोणके ।
रोमहर्षणं रोमाञ्चे ना स्रुते च बिभीतके ॥
[4]वातरायण उन्मत्ते निष्प्रयोजनपूरुषे ।
काण्डे च करपत्रे च कूटे च शरसङ्क्रमे ॥
सन्निकर्षणमप्याहुः सान्निध्ये निकषोपले ।
सम्प्रधारणमित्युक्तं शब्दविद्भिः समर्थने ॥

॥ इति णपञ्चमम् ॥

---

१ ख. भीरुभे । २ ख. पारे ।
३ ख. पुस्तके पाठः । ४ ख. वाद ।

॥ अथ णषष्ठम् ॥

[1]जनोदाहरणं कीर्तिं प्रवदन्ति मनीषिणः ।
वयःसन्धौ च गर्भे च मतं दोहदलक्षणम् ॥
लावण्यकुचयोरुक्तमथ यौवनलक्षणम् ।

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये णान्तवर्गः ॥

---

॥ अथ तान्तवर्गः ॥

॥ अथ तैकम् ॥

महाबुद्धे तु[2] तः प्रोक्तस्तु विकल्पेऽवधारणे ।
कथ्यते ता [3]सटायां तु योगिनां गोविदां वरैः ॥

---

॥ अथ तद्वितीयम् ॥

अस्तं क्षिप्ते व्यवसिते त्रिषु ना पश्चिमाचले ।
अन्तं स्वरूपे नाशे ना नस्त्री शेषेऽन्तिके त्रिषु ॥
आर्तिः पीडाधनुष्कोट्योरतो हेत्वर्थमव्ययम् ।
आप्तिः स्त्री योगसम्प्राप्त्योराप्तो लब्धे स्वसत्ययोः[4] ॥
अथ स्यादात्तमादानेऽप्याप्तो मित्रे निगद्यते[5] ।
ईतिर्डिम्बेऽतिवृष्ट्यादावितं स्मृते गतेऽपि च ॥

---

१ ख. पु. पाठः ।
२ ख. मोहे युद्धे च ।
३ ख. संजटायां ।
४ ख, भ्ययोः ।
५ ख. व्याप्तो नित्ये निगद्यते, इति पाठभेदः ।

इत्यव्ययं समाप्तौ स्याद्वितर्के स्यादुताव्ययम् ।
उक्ता त्वेकाक्षरे छन्दस्युक्तिः स्याद्भाषितेऽपि च ॥
बीजावापे भवेदुप्तं[१] स्यादूतं तन्तुसन्तते ।
ऊतिः स्त्री रक्षणेऽप्यूताहृतिः[२] कल्याणवर्त्मनोः ॥
जुगुप्सास्पर्धयोः स्त्री स्यादृतमुञ्छशीले जले ।
दीप्ते सुपूजिते सत्ये वसन्तादावृतुः स्मृतः ॥
आर्तवे भासि च पुमानेतः कर्बूर[३] आगते ।
विस्तारे तु भवेदोतं बिडाले [४]त्वोतुरुच्यते ॥
परमेष्ठिनि कर्ता स्याद्वाच्यलिङ्गस्तु कारके ।
[५]क्रतुर्मखे मुनौ पुंसि कन्तुः स्यात्पञ्चसायके ॥
कान्तिरिच्छाशोभयोः स्यात्कान्तो भर्तरि शोभने ।
कान्ता स्त्रियां प्रियङ्गौ च, स्यादश्मनिग्रहे तथा ॥
कान्तं च चन्द्रसूर्यायःपर्यायान्तं निगद्यते ।
कीर्तिः प्रसादे यशसि विस्तारे कर्दमेऽपि च ॥
कुन्तः प्रासे [६]क्षुद्रजन्तौ दण्डभावे गवेधुके ।
कुन्ती पाण्डुप्रियायां स्याच्छल्लक्यां गुग्गुलावपि[७] ॥
चर्मनिर्मितसस्नेहपात्रे तु स्यात्कुतूः स्त्रियाम् ।
कृतं युगेऽलमर्थे च विहिते हिंसिते त्रिषु ॥
कृतिः क्रियायां कृत्तिस्तु भूर्जे चर्मत्वचोरपि ।
कृत्तं तु [८]चेष्टिते छिन्ने क्लीबे केतं तु सद्मनि ॥

---

१ ख. क्ता ।   २ क. कृत्तिः । ख. कृतिः, इति मा. ।   ३ पूर ।
४ ख. त्वेनु ।   ५ क. ऋतु ।   ६ क्षुद्रजातौ चण्ड, इति मा. ।
७ क. कूतं ।   ८ वे, इति मा. ।

केतुर्ना [१]रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि ।
खातं गर्तेऽथ गर्तः स्यादवटे च कुकुन्दरे[२] ॥
[३]गर्तस्त्रिगर्तभेदे [४]स्याद्गतं विज्ञातयातयोः ।
लुप्तवर्णपदे ग्रस्तं ग्रस्तं ग्रासीकृतेऽपि च ॥
गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः ।
गातुस्तु[५] रोषणे [६]भृङ्गे पिकगन्धर्वयोरपि ॥
गीतिश्छन्दसि गाने स्त्री गीतं शब्दितगानयोः ।
गुप्तिः स्त्री रक्षणे कारागारे चावकरस्थले ॥
गुप्तं च रक्षिते गूढे गोप्ता स्यादपि रक्षके ।
घातो वधे मेलने च तथा काण्डप्रहारयोः[७] ॥
अथ घ्रातमवघ्राते घुतं स्यादपि शब्दिते ।
घृतमाज्ये च सलिले प्रदीप्ते त्वभिधेयवत् ॥
चित्संविदि चिता प्रोक्ता चित्यायामपि संहतौ ॥
चितिश्चित्याछन्दयोश्च चितं छन्ने च चेतसि[८] ॥
चिन्ताऽध्याने च्युतं पाते चूतश्चाम्रे निगद्यते ।
छिन्ने छातच्छिते, जन्तुर्जन्यमात्रे पुनर्जतु ॥
लाक्षायामव्ययं जातु कदाचिदिति भाषणे ।
जातमुत्पन्नमात्रेऽपि तथा व्यक्तौघजन्मसु ॥
जातिर्गोत्रे जन्मनि च सामान्यच्छन्दसोरपि ।
अश्मन्तिकामलक्योश्च मालत्यां च फले क्वचित् ॥

---

१ रुक्पताकारि इति मा. । २ ख. शटरे । ३ गर्त्तमिति मा. पाठः ।
४ स्याद्भूतं रिक्षा, इति मा. । ५ क. स्तु । ६ क. भृट । ख. भ्य, इति मा. ।
७ रोहयोरिति मा. । ८ चित्तमिति शेषः ।

जूतिस्तु जवने प्रोक्ता ज्वरे जूर्तिर्निगद्यते ।
ज्ञातिर्निगद्यते पुंसि तथा तातसगोत्रयोः ॥
आज्ञप्ते स्यान्नरि ज्ञप्तो ज्ञप्तं ज्ञाने स्त्रियामपि ।
ज्ञाताविन्दौ निगदितस्त्यक्तमुत्सृष्टहीनयोः ॥
ततं व्याप्ते विस्तृते च ततं वीणादिवादने ।
ततः सदागतावानन्तर्ये स्यादव्ययं ततः ॥
तन्तुर्यज्ञे च सूत्रे च लेशमात्रे निगद्यते ।
त्रस्तं भीते वाच्यलिङ्गं तान्तो ग्लाने त्रिलिङ्गकः ॥
त्रातस्तु रक्षिते तद्वत्तातः स्याज्जनकेऽपि च ।
अनुकम्प्ये शिष्यस्तन्वोस्तिक्तो रससुगन्धयोः ॥
तृप्तं तृप्तिश्च सौहित्ये त्रेता वह्नित्रये युगे ।
दाने तूदीर्यते दत्तं दन्तोऽद्रिकटके द्विजे ॥
कुब्जे चौषधिभेदे तु स्त्रियां दन्ती गजे पुमान् ।
दत्तस्तु मुनिभेदे स्याद्दान्तस्तु दमितेऽपि च ॥
तपःक्लेशसहे पुंसि दान्त इत्यभिधीयते ।
दातं छिन्ने दितं चापि दितिः स्याद्दैत्यमातरि ॥
खण्डनेऽपि स्त्रियां, दीप्तं ज्वलिते [1]भातदग्धयोः ।
दीप्तिर्भासि स्त्रियां, [2]भीते दीर्णं क्लीबे निगद्यते ॥
अथ द्रुतं विलीनेऽपि [3]विद्राणेऽपि च सत्वरे ।
दृप्तो मत्ते दृतिः कृत्तौ[4] द्युतिः स्त्री रश्मिशोभयोः[5] ॥

---

१ ख. वा । २ तप्ते द्रुतमिति मा. । ३ ख. विशीर्णे ।
४ चर्मपुटे, इति विश्वः । ५ ख. प्रीतयोः ।

धर्ता धातरि च[1] प्रोक्तः स्कन्ने ध्वस्तं निगद्यते ।
धातुः [2]श्लेष्मादिषु तथा गैरिकादिषु कीकसे ॥

इन्द्रियेषु महाभूततद्गुणेषु रसादिषु ।
धाता हिरण्यगर्भे ना पालके तु त्रिलिङ्गकः ॥

ध्वान्तं गाढेऽन्धतमसि ध्मातं शब्दे च[3] दीपिते ।
ध्यातं चित्तैकविषये वाच्यलिङ्गं धितं धृते ॥

धौतं पीते[4]ऽप्यथ धुतं त्यक्ते धूतं तु[5] कम्पिते ।
भर्त्सितेऽपि तथा धूतिः स्त्रियां स्यात्कम्पनेऽप्यथ ॥

धूर्त्तं तु खण्डलवणे धत्तूरे ना विटेऽपि च ।
[6]वञ्चकेऽपि च धूर्तः स्यात्तथा धूर्तो मतो विटे ॥

धृतिर्नैष्ठौ स्त्रियां तुष्टौ योगभिद्धैर्यधारणे ।
धृतं गृहीते धौतं तु शोधिते वाच्यलिङ्गकम् ॥

नतं [7]स्यात्तगरे क्लीबं नतः कुटिलनम्रयोः ।
नक्तं[8] रात्रौ भवेन्नप्ता पौत्रेऽपि प्रणतौ नतिः ॥

नमस्कर्तरि नन्ता स्यान्नीतिस्तु प्रापणे नये ।
नीतं त्वपहृतेऽपि स्यान्नुतिर्नुते मते स्तुतौ ॥

नुत्तं क्षिप्तेऽथ नृत्ये तु नृत्तं नृत्तिश्च गद्यते ।
नेता तु नायकेऽपि स्यादपहर्तरि तु स्मृतः ॥

---

१ ख. सं । २ क. रसा । ३ तिस्थषु, इति मा. ।
४ ख. ने । ५ ख. त्व । ६ ख. पाठः ।
७ स्यान्न, इति मा. । ८ ख. क्तो ।

पक्तिः स्त्री गौरवे पाके पत्तिर्ना पदगे[१] स्त्रियाम् ।
गतावेक[२]रथैकेभत्र्यश्वपञ्चपदातिके ॥
पङ्क्तिर्दशाक्षरवृत्तदशसङ्ख्याऽऽलिषु स्त्रियाम् ।
पतिर्धवे ना त्रिष्वीशे प्राप्तं लब्धे समञ्जसे ॥
पातो ना पतने त्राते[३] त्रिषु प्राप्तिर्महोदये ।
लाभेऽपि च मता प्रातिः स्त्रियां पूर्तिप्रदेशयोः ॥
पाता रक्षितरि प्राप्तं लब्धेऽथ जनके पिता ।
पित्तं दोषविशेषे स्यात्पीतं तु गिलिते मतम् ॥
हरिद्रायां तु पीता स्याद्गौरे पीतं तु वाच्यवत् ।
पीतिर्नाऽश्वे स्त्रियां पाने प्रीतं [४]हृषितनर्मणोः ॥
प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम् ।
पूतं त्रिषु पवित्रे च शोधिते बहुलीकृते ॥
पूर्तं खातादिके क्लीबं पूरिते तु त्रिलिङ्गकम् ।
पुस्तं क्लीबं पुस्तकेऽपि लेप्यादिशिल्पकर्मणि ॥
प्लुत[५]मश्वगतौ क्लीबं पुंसि त्रिमात्रके स्वरे ।
प्लुतिरुत्प्लवने पृक्तिः [६]स्पृष्टौ तु गमने प्लुतम् ॥
प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः ।
प्रोतं वाससि[७] क्लीबे स्यात्पोतो बाले पुमानयम् ॥
गृहस्थाने वहित्रे च वासस्यपि नपुंसकम् ।
दशवर्षगजे[८] पोतः कथितः शब्दवेदिभिः ॥

---

१ ख. के ।　　२ क. रथेभैक त्र्य, ख. रथे पाकत्य, इति मा. ।
३ ख. प्रात्ते ।　　४ ख. त्वृ ।　　५ ख. मश्व ।
६ ख. स्पृ ।　　७ विलम्बे, इति मा. ।　　८ ख. ते ।

बत इत्यव्ययं खेदे बन्तुः ? स्यात्पञ्चसायके।
भर्ता पोष्टरि नाथेऽपि धातर्यपि च गद्यते॥
भक्तिर्विभागे सेवायां भङ्क्ता[1] स्यान्नरि भञ्जके।
भक्तो भृत्ये भक्तमन्ने स्याद्भ्रान्तिरनवस्थितौ॥
मिथ्यामतौ च भ्रमणे भ्रान्तं[2] च भ्रमणे मतम्।
भातं तु स्फुरिते भाक्तं गौणेऽर्थे वाच्यलिङ्गकम्॥
भित्तिः[3] प्रदेशाश्रययोः कुड्ये चाप्यथ साध्वसे।
भीतं भीतिश्च, भूतं तु क्ष्मादौ[4] जन्तौ पिशाचके॥
प्राप्ते वृत्ते[5] समे सत्ये देवयोन्यन्तरे तु ना।
कुमारेऽपि भृतिः स्त्री स्यान्मूल्येऽपि भरणेऽपि च॥
भूतिर्भस्मनि सम्पत्तिहस्तिशृङ्गारयोः स्त्रियाम्।
भृतिस्तु भरणे स्त्री स्याद्भृतः[6] स्यात्सेवके पुमान्॥
मन्तुः स्यादपराधेऽपि मनुष्ये च विधातरि।
मतं तु सम्मते ज्ञाते मतिस्स्त्रीच्छाधियोः स्मृता॥
मङ्क्ता तु मज्जके मत्तः शौण्डे मङ्क्तिस्तु मज्जने।
मानकर्तरि माता ना जनन्यां तु मता स्त्रियाम्॥
माता[7] गौर्यादिषु तथा गोब्राह्मण्यादिभूमिषु।
मातं स्यान्मृतसम्बद्धेऽथा[8]भ्यस्ते म्लानमुच्यते ? ॥
मितिर्मानेऽप्यवच्छेदे मितं चापि तदर्थकम्।
मितः पुमान् हिंसिते तु मुक्तिर्मोक्षे च मोचने॥

---

१ ख. ङ्क्तः। २ क. न्ते। ३ ख. भृतिः। ४ ख. तौ।
५ ख. त्ये। ६ ख. तिः। ७ ख. अपि। ८ ख. ना।

मुक्तस्तु प्राप्तमोक्षे स्यान्मुक्तः स्यान्मोचितोऽपि यः ।
स्त्रियां तु मौक्तिके मूतं बद्धे हर्षे तु मुत् स्त्रियाम् ॥
मूर्तिः काये च काठिन्ये मूर्तः स्यान्मूर्तिमत्यपि ।
मूर्त्तं स्यात्त्रिषु मूर्च्छाले मृतं तु याचिते मृते ॥
यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान् ।
यन्ता मेढे[1] च सूते च यत्तः [2]स्याद्यत्नवत्यपि ॥
यतो बद्धे गते यातं याता गन्तरि गद्यते ।
क्लीबे तु राक्षसे यातु[3] युतं[4] हस्तचतुष्टये ॥
स्त्री न्याययोषितोर्युक्तिर्युतो[5] युक्तेऽपृथग्गते ।
योगकर्तरि योक्ता स्याद्रतः[6] स्यादनुरागिणि ॥
नील्यादिरञ्जिते रक्तं रक्तं स्याल्लोहिते त्रिषु ।
रक्तं तु कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि ॥
रतिर्मदनयोषायां रागे सुरतगुह्ययोः ।
[7]रतूर्वर्त्मनि नद्यां स्त्री रतं सुरतगुह्ययोः ॥
रन्ता तु क्रीडके[8] पुंसि रातः[9] स्यात्परिरक्षिते ।
रिक्तं शून्ये वनेऽपि स्याद्रीतिः [10]स्यन्दप्रचारयोः ॥
पित्तले लोहकिट्टे च रुतं शब्द ऋतुः[11] पुनः ।
वसन्तादौ स्त्रीरजसि रेतः शुक्रे निगद्यते ॥
लता वीरुत्स्त्रियोः स्पृक्कामाधव्योश्च प्रियङ्गुनि ।
कस्तूरिकायां शाखायां दूर्वाज्योतिष्मतीद्वयोः ॥

---

१ गाढे, इति मा. ।   २ ख. स्याद्भूत ।   ३ ख. ते ।   ४ क्तमिति मा. ।
५ ख. ऽभ्यु ।   ६ ख. रतं ।   ७ ख. पु. पाठः ।   ८ ख. डिते ।
९ ख तं ।   १० क. स्प ।   ११ ऋतुशब्दः प्राङ्निर्दिष्टः ।

लत्ता पादहतौ लातं गृहीते वाच्यलिङ्गवत् ।
लिप्तो विषाक्ते बाणे स्याल्लिप्तं त्रिषु विलिप्तके ॥

लुप्तं [1]प्रलोपिते लूता[2] गदभेदे मता स्त्रियाम् ।
पिपीलिकायां च तथा मता लूतोर्णनाभके ॥

लूतिस्त्वौषधभेदे स्यान्मतो लेप्ता तु लेपके ।
लोतिः स्त्रियां पिष्टपिण्डे ? लोप्ता स्यात्पुंसि लोपके ॥

लोतस्त्वश्रुणि वक्ता तु वाग्मिन्यथ च पण्डिते ।
व्यस्तं तु व्याकुले व्याप्ते व्यक्तः [3]स्फुटमनीषिणोः ॥

वप्ता तु जनके पुंसि व्यक्तिः स्यात्पृथगात्मता ।
वस्तिर्द्वयोर्निरूहे नाभ्यधोभूम्नि दशासु च ॥

वर्ति[4] भैषजनिर्माणे नयनाञ्जनलेखयोः ।
गात्रानुलेपनीदीपदशादीपेषु योषिति ॥

वार्ता तु वर्तने [5]वातिङ्गणे [6]कृष्याद्युदन्तयोः ।
निःसारारोग्ययोः क्लीबं [7]वृत्तिमन्नीरुजोस्त्रिषु ॥

व्याप्तं ख्याते समाक्रान्ते व्याप्तिर्व्यापनलम्भयोः[8] ।
व्याप्तं वीणादिवाद्ये स्यादथ वातः समीरणे ॥

वार्तमुक्तं तथाऽरोग्ये व्रातः [9]सङ्घेऽभिधीयते ।
उद्गीर्णं तु भवेद्वान्तः भवेद्वित्तिर्विचारणे[10] ॥

---

१ ख. प्रलू । २ ख. ना । ३ क. टे मनीक्षिणि ।
४ ख. र्त्ति । ५ वातगणे, इति मा. । ६ ख. कृषणा ।
७ क. वृति । ८ ख. व्यायतज्म्भयोः ।
९ क. सन्धे, ख. सले इति मा. । १० क. रिणे ।

लाभसम्भवयोर्वित्ति[1]र्वित्तं ख्याते विचारिते ।
धनेऽथ वीतिस्तु गतौ धावने प्रजनेऽशने ॥
दीप्तौ, वीतं त्वसारे तु गजे च तुरगे तथा ।
शान्ते वीतमपि क्लीबे तथैवाङ्कुशकर्मणि ॥
वृत्तमाचरणे छन्दस्यपि वृत्तिस्तु वर्तने ।
जीवनेऽपि भवेद्वृत्तिः कौशिक्यादिप्रवर्तने ॥
वृतिस्तु वरणे वृन्तमुक्तं प्रसवबन्धने ।
कुचाग्रे घटीधारायां वृत्तमित्यभिधीयते ॥
वृत्तोऽधीतेऽ[2]प्यतीते च वर्तुलेऽपि मृते वृते ।
दृढेऽन्यलिङ्गवान् क्लीबं छन्दश्चारिचवृत्तिषु ॥
वेत्ता स्याज्ज्ञातरि नरे वेदितं ज्ञापितेऽपि च ।
शतं सङ्ख्यान्तरे शस्तमुक्तं क्षेमप्रशस्तयोः ॥
शक्तिरस्त्रान्तरे शौर्य उत्साहादौ बले स्त्रियाम् ।
अथाक्लिष्टे भवेच्छ्रतं शान्तिः स्त्री मङ्गले शमे ॥
शान्तोऽतिमुक्तरसयोर्वारणे शान्तमव्ययम् ।
श्रान्तिः क्लमे शमे शान्तं शास्ता स्याद्देवताभिदि ॥
शासकेऽपि महीपाले, शितं स्यादपि दुर्बले ।
निशिते च [3]शितिर्भूर्जे ना सिताऽसितयोस्त्रिषु ॥
शीतं [4]हिमगुणे प्रोक्तं शीतलालसयोस्त्रिषु ।
वानीरे बहुवारे ना श्रितः[5] स्यादाश्रयीकृते ॥

---

१ ख. स्वापि । २ प्र, इति मा. । ३ ख. श्रिते ।
४ ख. हिमे । ५ ख. तं ।

श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्तयोः स्त्रियाम् ।
शुक्तिः कपालशकले शङ्खे शङ्खनखेऽपि च ॥
नख्यश्वावर्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम् ।
शुक्तमम्लीकृते पूते निष्ठुरे च निगद्यते ॥
श्रुतमाकर्णिते शास्त्रे श्वेतो द्वीपाद्रिभेदयोः ।
श्वेता वराटिकाकाष्ठपाटलाशङ्खिनीषु च ॥
श्वेतं रूप्ये तु सन् मान्ये साधौ च धीरशस्तयोः ।
विद्यमाने तथा सत्ये सती [1]साध्व्युमयोः स्त्रियाम् ॥
स्रस्तं भ्रष्टे तथा स्नातः स्नातके च कृताप्लवे ।
[2]स्फीतिर्वृद्धौ स्त्रियां सातिर्दाने चाप्यवसानके ॥
स्वान्तं तु गह्वरे चित्ते सीता लाङ्गलपद्धतौ ।
स्वर्गङ्गायां च वैदेह्यां सञ्चाररहिते स्थितः ॥
स्थितिः स्त्रियां च मर्यादासीम्नोरथ सितं मतम् ।
[3]बद्धे चावसिते श्वेते शर्करायामपि स्त्रियाम् ॥
सुतस्तु भूपतौ पुत्रे पुत्रिकायां सुता मता ।
सुतस्त्वभिषुते[4]ऽपि स्यात्सुप्तः स्यादपि निद्रिते ॥
सुप्तिः स्पर्शाज्ञतातन्द्र्योः स्वापविस्रम्भयोः स्त्रियाम् ।
सूतस्तु पारदे पुंसि प्रसूते प्रेरिते त्रिषु ॥
क्षत्रियाद्ब्राह्मणीपुत्रे सारथौ तक्ष्णि बन्दिनि ।
स्यूतिः स्त्रियां सन्ततौ स्यात्स्यूतं स्यात्तन्तुसन्तते ॥

---

१ क. साध्वु । २ ख. स्ना ।
३ ख. बं । ४ ख. स्तुते ।

स्यूतः प्रसेवके ना चिषूतेऽथ स्यात्स्मृतिः स्त्रियाम्।
धर्मशास्त्रस्मरणयोः सृति[1]र्गमनमार्गयोः॥
सेतुः कुमारके नाल्यौ स्रोतः प्रवहणे मतम्।
हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च॥
ऋक्षभेदे, हतं नष्टे ताडितेऽपि च वाच्यवत्।
हन्ताव्ययं भवेत्खेदे हन्ता तु स्यान्निहन्तरि।
हितं घृते गते पथ्ये हितं मित्रे[2] निगद्यते।
ह्रीतस्तु लज्जासंपन्ने हुतं होमे निगद्यते॥
हुतिः[3] स्त्रियां मताऽऽह्वाने हवने[4] च निगद्यते।
हृतं त्वपहृते वाच्यलिङ्गं स्याद्धेतिरायुधे॥
ज्वालायां च स्त्रियां सूर्ये तेजस्यपि तथा मता।
हेतुः स्यात्कारणे लिङ्गे होता त्वृत्विजि च क्वचित्॥
क्षतं व्रणे भवेत्क्लीबे क्षतस्तु व्रणवत्यपि।
क्षतिर्नाशे स्त्रियां क्षन्ता सहने पुंसि गद्यते॥
क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ।
भुजिष्यातनयेऽपि स्यान्नियुक्तेऽपि च वेधसि॥
क्षान्तं क्लीबे निगदितमपराधप्रमार्जने।
क्षिप्तं तु क्षेपिते वाच्यवद्धरण्यां क्षितिः स्त्रियाम्॥
निवासेऽपि क्षये[5] कालभेदेऽथ क्षवथौ क्षुतम्।

॥ इति तद्वितीयम् ॥

---

१ ख. गग। २ क. पथ्ये। ३ ख. ह्वतिः। ४ ख. नने। ५ ख. मे।

॥ अथ ततृतीयम् ॥

अर्हतश्चापि सुगते क्षपणेऽपि च गद्यते।
अगस्तिः स्यात्कुम्भयोनौ वङ्गसेनतरावपि ॥
अर्वती[1] कुम्भदास्यां च वडवायां च योषिति।
अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते ॥
अयाचिते च मोक्षे च ना धन्वन्तरिदेवयोः।
अमृता तु भवेत्पथ्यागुडूच्यामलकीषु च ॥
अजितः कमलाकान्तेऽप्यजिता हरयोषिति।
अजितौषधिभेदे [2]स्यादच्युतोऽनिर्जिते स्थिरे ॥
हरौ, च योषिति पुनर्गौर्यामप्यच्युता मता।
अर्दितं स्याद्याचितेऽपि वातव्याधौ च हिंसिते ॥
अक्षताश्चापि लाजेषु तण्डुलादावहिंसिते[3]।
अव्यक्तस्तु हरौ गुप्ते शङ्करे महदादिके ॥
आत्मन्यपि, तथानन्तो गदितो विष्णुशेषयोः।
अनन्ता सारिवादूर्वाविशल्यालाङ्गलीषु च ॥
अनन्ता हैमवत्यां च गुडूच्यां च क्षितावपि।
अनन्तं व्योम्नि क्लीबे स्यात्पूजिते त्वञ्चितं मतम् ॥
अतीतं पूर्ववृत्तेऽपि सुदृढेऽपि निगद्यते।
[4]अंहतिस्तु भवेद्दाने निर्बुद्धावमतिः पुमान् ॥

---

१ न्ती, इति मा.।  २ ख. स्यादा।
३ ञ्चिति शेषः।  ४ ख. ञ्च।

अदितिर्वसुधायां [1]स्याददितिर्देवमातरि ।
अखातं स्याद्देवखातेऽसत्ये त्वनृतमीरितम् ॥

[2]अश्मन्तस्तरुभेदे स्यादश्मन्तं [3]मरणे मतम् ।
अमितं स्यादसङ्ख्यातेऽप्यमितः काल उच्यते ॥

अर्चितः पूजितजनेऽप्यसितः श्यामले मतः ।
अरतिः स्यादसन्तोषे त्वर्पितं [4]स्यात्समर्पिते ॥

अंहतिस्त्वशुभे त्यागरोगयोरङ्गतिः पुनः ।
पुंस्यग्निहोत्रवह्निष्वप्यापातः पतने मतः ॥

तदात्वे स्यादथाघ्रातं [5]शिङ्घितक्रान्तयोरपि ।
आध्मातः पवनव्याधा आख्यातं भाषिते तिङि[6] ॥

आप्लुतः स्नातके स्नातेऽप्याहृतः सादरेऽर्चिते ।
आचितः शकटोन्मेये पलानामयुतद्वये ॥

पुल्लिङ्गः सङ्गृहीतेऽपि [7]छन्नेऽपि स्याच्चिलिङ्गकः ।
आहतं तु मृषार्थे स्यात्ताडिते गुणितेऽपि च ॥

स्यात्पुरातनवस्त्रेऽपि नववस्त्रेऽपि [8]नाऽऽनके ।
आनर्तः[9] स्याद्देशभेदे नृत्यस्थाने जले[10] रणे ॥

आवर्तश्चिन्तने वारिभ्रमे चावर्तनेऽपि च ।
आस्फोतः कोविदारार्कपर्णयोरभिधीयते ॥

---

१ ख. स्यादपि सा । २ ख. अस्म । ३ ख. वरु ।
४ क. स्यात्पुमर्पिते । ५ सिङ्घितघ्रा, इति मा. ।
६ भिदि, इति मा. । ७ छि, इति मा. ।
८ ता, इति मा. । ९ ख. र्तें । १० ने, इति मा. ।

आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति।
आयतिस्तु स्त्रियां [१]दैर्घ्ये प्रभावागामिकालयोः॥

आयत्तिस्तु स्त्रियां स्नेहे वशित्वे वासरे बले।
आयस्तः क्लेशिते क्षिप्ते तेजिते कुपिते [२]हते॥

आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपि।
आसक्तिः[३] सङ्गमे लाभे स्त्रियामापत्तिरापदि॥

प्रापणेऽपि च योषित्स्यादापातः पतने पुमान्[४]।
आनतिस्तु प्रणामे स्यादाहतिर्हनने भवेत्॥

[५]आश्रुतं स्यात्प्रतिज्ञातेऽप्याहतः सादरार्थवान्।
अथेच्छाविषयीभूतेऽपीषितं[६] च तथेक्षिते॥

इङ्खितं स्याद्गतौ क्लीबे हीरितं समुदीरिते।
इङ्गितं चेष्टिते प्रोक्तमीक्षितं त्ववलोकिते॥

[७]ईषितं त्वुञ्छिते शस्ते संस्तुतावीडितस्तथा[८]।
उषितं व्युषिते दग्धेऽप्युदन्तः साधुवार्तयोः॥

उदात्तः स्वरभेदे स्याद्दयात्यागादिसंयुते।
काव्यालङ्करणे कृत्येऽप्युदितं [९]तूक्त उद्गते॥

उतप्तं शुष्कमांसे स्यात्त्रिषु तप्ते परिप्लुते।
उचितं तु भवेन्न्यस्ते मिते [१०]ज्ञाते समञ्जसे॥

---

१ ख. भेदे। २ ख. हि। ३ ख. स्रुतिः।
४ पूर्वं गतः। ५ ख. आलातं वह्निवत्काष्ठे।
६ क. रितं, ख. डितमिति मा.। ७ ईञ्छित त्विञ्छि, इति मा.।
८ ते डिते, इति मा.। ९ ख. भु। १० जा, इति मा.।

उच्छ्रितं त्रिषु सञ्जाते [1]समुन्नतप्रवृद्धयोः[2] ।
उन्मत्तस्तु भवेच्चौण्डे धत्तूर[3]मुचकुन्दयोः ॥

उन्नतस्तु भवेद्दीर्घे द्रुमे त्रिष्वपि चोद्गते ।
उद्घातस्तु भवेत्पादस्खलने समुपक्रमे ॥

पवनाभ्यासयोगस्य कालभेदेऽप्युदीरितः ।
उद्रङ्गे सुकुमारे स्यादुत्थितो वृद्धिमत्यपि ॥

भुक्तोज्झितेऽप्युद्वृत्तं स्यादुदितं तूद्गतेऽपि च ।
उत्क्षिप्तमूर्ध्वक्षिप्ते[4] स्यात्परित्यक्तेऽपि वाच्यवत् ॥

उद्रिक्तं स्यादुर्वरितेऽप्युत्प्लुतं गमनान्तरे ।
उत्थितं तु समुत्थानेऽप्युदितं तु समुद्गते ॥

तापादिनोर्ध्वगमने स्यादुच्छिक्तमपि त्रिषु ।
निर्मयादेऽप्युद्गतः[5] स्यादुद्भूतं प्रकटीकृते ॥

उक्षितं प्रोक्षितेऽपि स्यादुपेतः प्राप्तमाचके ।
उन्नीतं तर्कितेऽपि स्यादुत्कृत्तं छिन्नवस्तुनि ॥

उपान्तं[6] स्यादनुप्रान्ते[7] जये स्यादुज्जितिः स्त्रियाम् ।
उत्पाटिते[8] स्यादुत्खातमुद्गीतं सामगायने ॥

न्यूनीकृते तूनितं स्यादुपात्तं स्वीकृतावपि ।
ऊर्मितं विषमस्थूलेऽप्युद्भ्रान्तं तु परिभ्रमे ॥

---

१ समुन्नद्ध, इति मा. । २ ख. वर्त्तयोः । ३ ख. मुचु ।
४ ख. प्रे । ५ क. वृत्तः । ६ ख. त्तं ।
७ ख. प्ते । ८ ख. दिते ।

उत्पातस्तूदितो रिष्टेऽप्येधतुः पुरुषेऽनले।
एजितः कम्पिते दीप्ते[1]ऽपनयेऽप्योणितं मतम्॥

अथ क्रन्दितमाह्वाने रुदिते च नपुंसकम्।
कापोतो रुचके क्लीबं कपोतौघेऽञ्जनान्तरे॥

क्वणितं शब्दविषये क्रमिता [2]चालके पुमान्।
कविता स्यात्तु काव्यादावुक्तार्थे कथितं मतम्॥

कलितं त्ववबुद्धे स्यात् क्वथितं परिपाचिते[3]।
अथ स्यात् क्रयितं क्रीते क्रमितं गमिते विदुः॥

कम्पितं स्यात्तु विधुते क्रव्यात्स्याद्राक्षसे खगे।
केशप्रसाधनद्रव्ये कङ्कती समुदाहृता॥

काङ्क्षितं [4]त्वीहितार्थे स्यात्कामितं च तदर्थकम्।
मतं च काचितं [5]बद्धे क्रामितं[6] विक्रमान्विते॥

किरातो म्लेच्छभेदे स्याद्भूनिम्बेऽल्पतनावपि।
स्त्रियां चामरवत्यां[7] स्यात्कुट्टनीदुर्गयोरपि॥

कुपितः स्याद्रोषयुते शाठ्ये तु कुसृतिः स्त्रियाम्।
कुञ्चितं स्यात्तु सङ्कोचे निन्द्ये[8] कुत्सितमीरितम्॥

कूर्दितं तु प्लवे प्राहुः कूणितं कूजितं रणे[9]।
कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु॥

केशितं केशविषये केलितं क्रीडिते मतम्।
किरातसङ्घे कैरातं कोपितस्तु रुषान्विते॥

---

१ ख. प्य। २ पा. इति मा.। ३ क. धिते।
४ ख. त्व। ५ ख. बु। ६ यितमिति मा.।
७ क. ख. नद्यामिति मा.। ८ ख. न्दे। ९ ख. णे।

खचितं तु भवेद्व्याप्तौ खनितं क्षोदिते मतम् ।
खलतिः [1]केशहीने स्यात्पुंसि छिन्नेऽपि खण्डितम् ॥
खण्डिता पत्यन्तरिता खगितस्थपिते समे ।
खादितं गिलिते प्रोक्तं खेदितं [2]खेदसंयुते ॥
क्रीडायुते खेलितं स्यान्निन्दिते स्यात्तु गर्हितम् ।
गर्जितं वारिवाहादिध्वनौ ना मत्तकुञ्जरे ॥
ग्रथितं गुम्फिते क्रान्ते हिंसिते च चिलिङ्गकम् ।
गभस्तिः किरणे सूर्ये ना स्वाहायां च योषिति ॥
गमितं यापिते प्रोक्तं ग्लानिते ग्लापितं मतम् ।
गर्मुत् स्त्री स्वर्णलतयोः[3] सङ्ख्याते गणितं मतम् ॥
गदितं वाचितेऽर्थे तु गर्भितं गर्भवत्यपि ।
ग्रसितं स्यात्तु [4]गिलिते गालितं शोधितार्थकम् ॥
गामितं प्रापितार्थे स्या द्व्यापिते गाहितं विदुः ।
गापितं गायितं गानविषये ग्रामता पुनः ॥
ग्रामानां तु समूहे स्यान्निगीर्णे [5]गिलितं विदुः ।
गीष्पतिर्निर्जरगुरौ ग्रथिते गुम्फितं मतम् ॥
गुपितं गूहिते प्रोक्तं गुणितं गणितार्थकम् ।
गोदन्तो हरितालेऽपि कथ्यते शब्दवेदिभिः ॥
गोपितं तु रहस्यार्थे गोपतिः शिवषण्ढयोः ।
नृपभास्करदिक्पालगोपेषु च निगद्यते ॥

---

१ क. पट, ख. पद इति मा. । २ क. खेदि ।
३ ख. नतयोः । ४ ख. ग । ५ ख. ग ।

गोमितं ? तूपलिप्ते स्याद्गोमती त्वृक्नदीभिदोः ।
घर्षितं घृष्टितार्थे स्याद्घटितं त्वपि निर्मिते ॥
घर्मितः स्वेदितेऽपि स्याद्घ्रापितं घ्राणमापिते ।
घूर्णितं तन्द्रिते प्रोक्तं घोलितं तु [1]प्रचालिते ॥
चरितं कर्मणि प्राहुः पौनःपुन्ये तु चर्वितम् ।
चमितं[2] भोजितेऽपि स्याच्चर्चितं[3] तु विलेपिते ॥
चकितं तु भवेत्स्पन्दे चलितं प्रचलायिते ।
स्याच्चारुता तु सौन्दर्ये चालितं त्वन्यथा कृते ॥
चावितं गालितेऽपि स्याच्चिह्नितं स्यात्तथान्तिके ।
चिन्तितं चित्तविषये चेष्टितं स्यात्तु कर्मणि ॥
चूषितं भक्षणभिदि चूर्णितं चातिकुट्टिते ।
प्रेरिते चोदितं प्रोक्तं चोरितं स्यात्तु निह्नुतौ ॥
चोरता स्याच्चोरकृतौ छलितं तु प्रतारिते ।
छर्दितं स्यात्तथोद्गीर्णे छादितं पिहिते मतम् ॥
छाचीकृते छाचितं स्याच्छायितं[4] छेदिते विदुः ।
छुरितं मिश्रिते प्रोक्तं छेदितं तु द्विधाकृतौ ॥
स्याज्जगद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु ।
जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ॥
जयन्ती वृक्षभिद्गौर्योस्तिथिभेदपताकयोः ।
जयन्ती स्यादिन्द्रपुत्र्यां जयन्तस्तत्तनूजनौ ॥

---

१ ख. प्रचो । २ ख. मितं ।
३ ख. वितं । ४ पितमिति मा. ।

हरे [1]भीमेऽथ ज्वलितं वाच्यवद्दग्ध उज्ज्वले ।
जनता जनसङ्घे स्याज्ज्वरितं तु ज्वरान्विते ॥
जनिता जनके पुंसि जनिता निर्मितौ स्त्रियाम् ।
हिंसिते स्याज्जासितोऽथ जामाता दुहितुः पतिः[2] ॥
सूर्यावर्ते धवे पुंसि जामिताऽलस्यवाचिनी[3] ।
जीमूतः स्या[4]द्देवताडे [5]मेघे भृतिकरे गिरौ ॥
जीवातुर्जीविते भक्ते जीवनीयौषधेऽपि च ।
जीवन्ती देवताशम्योर्गुडूचीवन्दयोरपि ॥
जिह्मता स्यात्तु कौटिल्ये जीवितं जीवने भृतौ ।
जृम्भितं करणे स्त्रीणामीहास्फुटितयोरपि ॥
जृम्भे, च जेमितं तु स्याज्जोजिते जोङ्गितं मतम्[6] ।
झरितं हिंसितेऽपि स्याज्झरितं झरयुज्यपि ॥
अथ स्याज्ज्ञापितो ज्ञप्ते तडिदुक्ता तु विद्युति ।
त्वरितं प्रजवे शीघ्रे [7]तैलितं स्नेहपाचिते ॥
तन्द्रितं स्याद्घूर्णितेऽथ तन्त्रितं शास्त्रसम्मते ।
श्लक्ष्णीकृते तक्षितं स्यात्समे तापितताभिते[8] ॥
त्रासितं जनितत्रासे तारितं तरणान्विते ।
तानितं तानितपटे तिमितं स्तिमितार्थके ॥

---

१ मौने, इति मा. ।
२ तौ, इति मा. ।
३ ख. नि ।
४ ख. तोऽब्दे ।
५ ख. मध्ये ।
६ वर्जित इति शेषः ।
७ क. ते, ख. त, इति मा. ।
८ ख. तौ ।

[१]तार्क्ष्यतो वासुदेवे स्याच्छार्ङ्गे तु तृणता मता ।
त्रिगर्तो ना देशभेदे तथा स्याद्गणितान्तरे ॥
भवेद्घुर्घुरिकायां च त्रिगर्ता कामुकस्त्रियाम् ।
तुलितं स्यात्तुलाक्रान्ते तुषितो देवभिद्यपि ॥
तृणता तु तृणत्वे स्यात्तथा धनुषि गद्यते ।
तोदितं तु प्रेरिते स्यात्तोलितं तु तुलाधृते ॥
दंशितं जातदंशे स्यात्कवचेनावृतेऽपि च ।
दयितं तु प्रिये पुंसि भर्तर्यपि निगद्यते ॥
दमितं दमसम्पन्ने दलितं विदलीकृते ।
दापितं दानविषये दारितं तु विदारिते ॥
दुर्गतिर्नरके नैःस्व्ये स्त्री दृष्टान्त उदाहृतौ ।
शास्त्रे च मरणे चाथ पापे दुरितदुष्कृते ॥
दुर्वृत्तिस्त्यक्तयोषायां दुर्बुद्धौ दुर्मतिर्मतः[२] ।
दुःश्रुतं दुरधीते [३]स्याद्दुष्पाके दुःश्रुतं मतम् ॥
दुष्यन्तः स्याद्राजभेदेऽप्युपलायां दृषत् स्त्रियाम् ।
दृष्टान्तः स्यात्कथाशास्त्रे दृष्टान्तस्तु निदर्शने ॥
दोलितं कम्पितेऽपि स्याद्दौष्यन्तिर्नृपभिद्यपि ।
ध्वनितं तु निनादे स्याद्धर्षितं[४] तु [५]प्रधर्षणे ॥
धमितं स्यात्तथाध्माते धक्षितं भक्षिते मतम् ।
धिक्कृतं स्यादपध्वस्ते प्रमत्ते धूपितं मतम् ॥

---

१ ख. पु. नास्ति, क. टण, इति मा. । २ ख. ता ।
३ ख. स्याद्दुः । ४ ख. ध्वनितं । ५ ख. प्रध ।

धूमायिते धूमितं स्याद्धूर्गतः[१] सारथौ पुमान् ।
धैवतः[२] स्वरभेदे स्यान्नमितः स्याद्विनामिते ॥
नन्दितो हर्षसम्पन्ने न्यक्कृतो धिक्कृते[३] मतः ।
नादितं नादसम्पन्ने नाशितं तु विनाशिते ॥
न्यासितं स्यात्तु विन्यस्ते निमित्तं हेतुलक्ष्मणोः ।
निर्ऋतिः स्यादलक्ष्म्यां स्त्री दिक्पालेऽपि क्वचित्पुमान् ॥
निकृतं स्याद्विप्रलब्धे[४] शठे विप्रकृते त्रिषु ।
निर्मुक्तो मुक्तसङ्गे स्यान्मुक्तकञ्चुकभोगिनि ॥
निरस्तस्त्रिषु निष्ठ्यूते प्रेषितेषौ द्रुतोदिते ।
सन्त्यक्ते च प्रतिहते निकेतं सदने मतम् ॥
निवातो दृढसन्नाहे [५]वातशून्ये तथाश्रये ।
निकृतिर्भर्त्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम् ॥
निशान्तस्त्रिषु शान्ते स्यात्क्लीबं तु भवनोषसोः ।
निर्वृतिः[६] सुस्थितावस्तङ्गमने च सुखे स्त्रियाम् ॥
नियतिर्नियमे दैवे स्त्री पतन्यातुके[७] खगे[८] ।
निर्वृत्तं[९] स्यात्तु निष्पन्ने निर्णिक्तं शोधिते मतम् ॥
निष्ठ्यूतं तु भवेत्क्षिप्ते निष्पीतं पीतमाचके ।
निर्धूतं तु भवेद्धौते नियन्ता पुंसि शास्तरि ॥
सङ्ख्याभेदे तु नियुतं निरतं[१०] तु निरन्तरे ।
नितान्तं स्यादतिशये नियतो नियमान्विते ॥

१ ख. तौ ।  २ ख. त ।  ३ ख. तौ ।  ४ ख. ब्धौ ।
५ क. वाल ।  ६ ख. वृत्तिः ।  ७ ङ्घातुके, इति मा. ।
८ अयं पादः पकारादिषु न्याय्यः ।  ९ क. वृत्तं ।  १० ख. युतं ।

निर्भ्रान्तः स्याद्भ्रान्तिहीने[१] निवीतमृजुसूचके ।
निहितं तु विनिक्षिप्ते निष्णातं निर्णयान्विते ॥

निर्व्यक्तं व्यक्तिभूयिष्ठे निचितं तु समूहिते ।
निर्मितं कृतनिर्माणे दैवे स्यान्नियतिः स्त्रियाम् ॥

निशान्तः शान्तिमापन्ने निभृतो गुप्तशिक्ष्ययोः[२] ।
निवृत्तिः[३] स्यान्मनस्तुष्टौ नोदितं प्रेरिते मतम् ॥

पलितं शैलजे तापे केशपाके च कर्दमे ।
प्रसृतः सम्प्रसारे स्याद्विनीते वेगिते त्रिषु ॥

[४]अर्द्धाञ्जलौ तु पुल्लिङ्गो जङ्घायां प्रसृता मता[५] ।
प्रसूतं कुसुमे क्लीबं त्रिषु सञ्जातसूतयोः ॥

प्रभूतं प्रचुरे प्रोक्तं पण्डितः सिल्हके कवौ ।
प्रहतं विहते क्षुसे पर्यस्तः पतिते [६]हते ॥

प्रणीता यज्ञपात्रे स्यात्प्रणीतः संस्कृतेऽनले ।
त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते ॥

प्रणतिः स्यान्नमस्कारे प्रणतस्तद्युते नरि ।
प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु ॥

प्रमितं स्याद्वाच्यलिङ्गं [७]प्रोक्षितेऽपि मृतेऽपि च ।
परेतो वाच्यलिङ्गः स्यान्मृते भूतान्तरे पुमान् ॥

पर्वतः स्यात्पुनः शाकभेदमत्स्यप्रभेदयोः ।
देवमुन्यन्तरे शैले प्रपातो निर्झरे तटे ॥

---

१ युते, इति मा. । २ दन्तशिल्पयोरिति मा. । ३ क. वृतिः ।
४ स्याद, इति मा. । ५ क. एतदनन्तरं पाणिर्निकुब्जः प्रसृतिरिति पाठः ।
६ ख. हृ । ७ ख. प्रे ।

पर्याप्तं तु यथेष्टे स्याच्छक्ते तृप्तौ निवारणे ।
पञ्चता मरणे पञ्चभावेऽपि च निगद्यते ॥

पक्षतिः पक्षमूले स्यात्पक्षतिः प्रतिपत्तिथौ ।
प्रसूतिः स्यात्समुत्पत्तौ तनये दुहितर्यपि ॥

प्रततिः स्यात्तु विस्तारे वल्ल्यामपि निगद्यते ।
प्रवृत्तिस्तु प्रवाहे स्यादुदन्तेऽपि च गद्यते ॥

अवन्त्यादौ च पर्याप्तिः प्रकामप्राप्तिरक्षणे ।
प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः ॥

योनौ लिङ्गे पौरवर्गे मतं प्रव्यक्तमुल्बणे ।
[1]परितः[2] स्यादासमन्तात्परीतं[3] दिश्यथो विदि[4] ॥

प्रमितिर्योषिति पुनः परीतं व्याप्तिवाचकम् ।
पङ्कितं पङ्कवत्स्थाने पठितं पाठसंस्कृते ॥

पणितं वस्तुनि क्रीते प्रसिद्धे प्रथितं मतम् ।
प्रयतं संस्कृते प्रोक्तं प्रयतो धीर इत्यपि ॥

प्रयतं नियमाक्रान्ते प्रततं विस्तृते मतम् ।
प्रदत्तं दानविषये प्रनृत्तं[5] नर्तने मतम् ॥

सम्भृते प्रभृतं प्रोक्तं प्रशस्तं शस्तकर्मणि ।
प्रहस्तो राक्षसभिदि [6]प्रशस्तो ज्ञातसम्भृते ॥

निरर्गलेऽपि प्रहतः प्रपातो निर्झरे मतः ।
प्रख्यातस्तु प्रसिद्धे स्यात्पदातिः पादगामिनि ॥

---

१ इतः साद्धश्लोकः ख. पुस्तके नास्ति । २ क. रीतः ।
३ ख. रितं । ४ दिवि, इति मा. ।
५ ख. वृतं । ६ ख. प्रह ।

प्रभातं तु दिनान्ते स्यात्प्रसितिर्बन्धने स्त्रियाम् ।
पद्धतिः कर्मसन्दोहग्रन्थे मार्गेऽपि [1]गद्यते ॥

प्रचेताः स्यात्तु वरुणे प्रणुतं तु नमस्कृतौ ।
पर्दितं [2]स्यादधोवायुनिर्गमे वाच्यलिङ्गवत् ॥

पार्वती सल्लकीदुर्गागोपालपुत्रिकासु च ।
प्रार्थितं [3]याचिते शत्रुसंरुद्धेऽभिहते त्रिषु ॥

पादातं स्याद्बले क्लीबे पाटितं तु द्विधाकृते ।
समापिते पारितं स्यात्प्राजिता पुंसि यन्तरि ॥

पाचितं परिपक्वे स्यात्पातितं कृतपातने[4] ।
पिहितं छादिते प्रोक्तं मांसे तु पिशितं मतम् ॥

पिण्डितं तु भवेद्गोले[5] पीडितं तु प्रपीडिते ।
पित्सन् विहङ्गमे पुंसि पतनेच्छौ च[6] वाच्यवत् ॥

प्रफुल्लिते पुष्पितं स्यात्पुटितं पुटसंस्कृते ।
पुटितं स्याद्धस्तपुटे पाटित[7]स्यूतयोरपि ॥

पूरणार्थे पूरितं स्यात्पूपितं पूपवत्कृते ।
एकीकृते [8]पूगितं स्यात्पुरोधसि पुरोहितः ॥

पृषद् मृगे पुमान् बिन्दौ न द्वयोः [9]पृषतोऽपि ना ।
अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभाविमौ ॥

निरीक्षिते प्रेक्षितं स्याद्याचार्थे प्रेषितं मतम् ।
निरीक्षिते प्रेङ्खितं[10] स्यात्प्रेरितं प्रेरणास्पदे ॥

---

१ ख. द्यु।  २ ख. स्यादथो।  ३ ख. पावि।  ४ क. या।
५ ख. द्रौले।  ६ ख. तु।  ७ ख. स्तू।
८ क. पु।  ९ ख. ष्ट।  १० ख. ङ्खितं।

प्रोक्षितं निहते[१] सिक्ते प्रोन्नतं दैर्घ्यवत्यपि ।
प्रोहितं च, परित्यक्ते प्रोज्झितं चापि वाच्यवत् ॥

प्रोर्णुतं प्रावृतेऽपि स्यात्फाणितं[२] त्विक्षुसम्भवे ।
बार्हतं च फले जम्बा बाधितं बाधवत्यपि ॥

बुधितं तु भवेद्बुद्धे [३]बृंहितं गजगर्जने ।
सामभेदे बृहत् क्लीबे बृहती वसनान्तरे ॥

छन्दोभित्क्षुद्रवार्ताकीवारिधानीषु वाचि च ।
कण्टकारीमहत्योश्च बोधितं बोधवत्यपि ॥

कुशीलवे मुनौ रामानुजे तु भरतस्तथा ।
दौष्यन्तौ[४] भारतं वर्षभेदे व्यासकृतावपि ॥

भणितं भाषिते पूर्णे भरितं भसितं[५] पुनः ।
स्याद्भस्मन्यथ गौर्णे तु भक्षितं भ्रमितं पुनः ॥

भ्रमवत्यपि तल्लिङ्गं भर्त्सितं तु तिरस्कृते ।
भारती वाचि वचने पक्षिवृत्तिप्रभेदयोः ॥

भासन्तः सुन्दराकारे चिषु ना भासपक्षिणि ।
भावितं वासिते प्राप्ते भूभृद् नाऽद्रौ महीपतौ ॥

भ्राजितं शोभिते भ्रान्ते भ्रामितं वाचि भाषितम् ।
[६]भासितं वासिते वाच्ये वाच्यवद्भाषितं मतम् ॥

भिक्षितं स्याद्याचितेऽपि भेदितं स्फोटिते विदुः ।
महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् ॥

---

१ क. ह्विते । २ क. टितं । ३ ख. ब्रु । ४ न्ते, इति मा. ।
५ क. ते । ६ इदं ख पुस्तके नास्ति ।

तत्त्वभेदे पुमान् श्रेष्ठे मरुद् देवे समीरणे ।
महितं तु पवित्रे स्यान्मणितं रतिकूजिते ॥
मथितं निर्जले [१]घोले तथालोडितघृष्टयोः[२] ।
मनितं तु भवेद्बुद्धे[३] मण्डितं भूषिते त्रिषु ॥
मन्त्रितं [४]मन्त्रसंयुक्ते मन्द्रितं मन्द्रवत्यपि ।
मापतिस्तु हृषीकेशे मापितं मानसंस्कृते ॥
मिहितं तु मनोज्ञे स्यान्मूर्छितो [५]मृतमूढयोः ।
सोच्छ्रयेऽपि दृढे[६] त्वाहुर्मुषितं खण्डितेऽपि च ॥
गवेषिते तु मृगितं मेदितं मूर्छिते हिते ।
म्लेच्छितं परभाषायां निगदन्ति मनीषिणः ॥
मोचितो मोक्षितश्चापि बन्धमुक्त उदीर्यते ।
मोटितं त्वन्यथाभावे यमितं नियमान्विते ॥
याजितः कारितमखे यापितः त्रिष्वतिक्रमे ।
स्त्रियां निगदिता विज्ञैर्योषिता योषिदित्यपि ॥
रजतं[७] विशदे दन्तिदन्तयोस्तारहारयोः ।
रक्षितं गोपिते प्रोक्तं विरहे रहितं मतम् ॥
रणितं[८] तु भवेच्छब्दे रचितं क्रमनिर्मिते ।
रसितं स्तनिते क्लीबे स्वर्णादिखचिते त्रिषु ॥
रञ्जितं रङ्गसंयुक्ते राद्धान्तस्त्वर्थनिर्णये ।
रुदितं क्रन्दिते प्रोक्तं रुतितं[९] चञ्चले[१०] मतम् ॥

---

१ ख. तक्रे । २ ख. घृष्टयोः । ३ वृद्धे, इति मा. ।
४ ख. मन्त्रि । ५ क. मत । ६ हृते, इति मा. ।
७ ख. जितं । ८ ख. जितं । ९ ख. दितं । १० ख. च चले ।

रुषितं तु भवेत्क्रुद्धे [1]रूषितं मलदूषिते ।
[2]रुशती वागकल्याणी वाणी ह्येषाऽवचोविदाम्[3] ॥
रेवती हलिपत्न्यां स्याद्दक्षमातृप्रभेदयोः ।
रोहितं लोहिते रक्ते ऋजुशक्रशरासने ॥
मीने मृगे च पुंसि स्यात्तथा रोहितकद्रुमे ।
[4]रोहितं रोहिते रक्ते रोपितं त्वधिरोहिते ॥
रोधितं त्वधिरुद्धे स्याद्रोलितं तु विवेचिते ।
विलोकिते रोकितं स्याद्रोचितं रुचिभाजिनि ॥
रोहिद् मृग्यां लताभेदे रोमितं रोमसंयुते ।
ललितं हारभेदे स्यादीप्सिते ललितेऽपि च ॥
लपितं वचसि प्राहुर्लज्जितं तु त्रपावति ।
लङ्घितं[5] स्यादतिक्रान्तौ[6] लक्षितं सम्यगीक्षिते ॥
लम्बितं तु निराधारे लम्भितं[7] प्रापिते मतम् ।
लापितं त्वधिरूढे स्याल्लुञ्चितं कृतलुञ्चने ॥
लुटितं स्यात्तु लोटत्यां[8] लुण्ठितं तु बलाद्धृते ।
लोहितं रक्तगोशीर्षे कुङ्कुमे च कुचन्दने ॥
तथा नदान्तरे भौमे वर्णे च त्रिषु तद्वति ।
वनिता जातरागस्त्रीस्त्रियोश्च त्रिषु याचिते ॥

---

१ ख. रु । २ ख. पु. पाठः ।
३ वचो विद्यामिति मा. । ४ लो, इति मा. ।
५ ख. घितं । ६ ख. न्ते । ७ ख. भितं ।
८ लोटत्यामिति, इकश्तिपौ धातुनिर्देश इति श्तिपानिर्दिष्टमपि प्रकरणाज्ज्ञात्वर्थं लक्षयतीति भावः । एवमन्यत्रापि ।

वनिता जनिता पुंसि वनिताऽपि वधूः स्त्रियाम् ।
[1]वनितं याचितेऽपि स्यात्सेवितेऽपि च वाच्यवत् ॥

वर्द्धितं प्रसृते[2] भिन्ने पूरिते[3] वहतिर्गवि ।
सचिवे पुंसि वहतुः पथिके वृषले पुमान् ॥

वल्गितं स्यादश्वगतौ वसितं[4] व्याकुले मतम् ।
वसतिः स्यात्स्त्रियां वासे यामिन्यां च निकेतने ॥

वमितः स्यात्समुद्गीर्णे वर्णितस्तु परिस्तुते ।
प्रलोभिते वञ्चितः स्याद्वन्दितस्तु नमस्कृते ॥

वर्मितः[5] स्यात्कङ्कटिते[6] वसन्त ऋतुभिद्यपि ।
विस्तारवल्ल्योर्व्रतती[7] वर्धितं [8]पूरिते मतम् ॥

वर्जितं स्यात्परित्यक्ते वहितं वाहने मतम् ।
वापितं तु भवेद्बीजाकृतमुण्डितयोस्त्रिषु ॥

व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्यवत् ।
व्याघातः स्यादन्तराये प्रहारे[9] योगभिद्यपि ॥

वासिता करिणीनार्योर्वासितं भाविते रुते ।
वासन्ती माधवीयूथ्योः[10] पाटलायां क्रमेलके ॥

वासन्तः कोकिलेऽपि स्यादुष्ट्रेनाऽवहिते विटे[11] ।
व्यापृतो दीर्घदृढयोर्वाक्पतिर्गुरुवाग्मिनोः ॥

---

१ ख. पु. नास्ति । २ सिते, इति मा. । ३ ख. जिते ।
४ क. सुतं । ५ ख. र्णितः । ६ ख. गटकिते ।
७ ख. घी । ८ ख. प । ९ ख. र ।
१० ख. थ्योः । ११ विषे, इति मा. ।

विविक्तं स्यादसम्पृक्ते रहःपूतविवेकिषु ।
वाच्यवद्दर्शिते[1] धीरे विनेता राज्ञि[2] शिक्षके ॥
विकृतोऽसंस्कृतेऽपि स्याद्वीभत्से रोगितेऽपि च[3] ।
विकृतिश्छन्दसोभेदे प्रकृतिव्यत्ययेऽपि च ॥
विश्रुतं[4] ज्ञातसंहृष्टप्रतीतेष्वभिधेयवत् ।
विनीतमुपनीते स्यादपनीते जितेन्द्रिये ॥
विनीतः सुवहाश्वे स्यान्निभृतेऽपि वणिज्यपि ।
विनतः प्रणते भंग्ने विनता तार्क्ष्यमातरि ॥
विनता [5]पिटिकाभेदे शिक्षिते त्वभिधेयवत् ।
विधाता कर्तृसामान्ये विधाता वेधसि स्मरे ॥
विजाता तु प्रसूतायां जनिते विकृतेऽन्यवत् ।
विश्वस्तो जातविश्वासे विश्वस्ता[6] विधवास्त्रियाम् ॥
विद्युत् सौदामिनीसन्ध्योः निष्प्रभे त्वभिधेयवत् ।
विहस्तो विह्वले षण्ढे[7] विपत्तिर्यातनास्वपि[8] ॥
विदितं बुद्धश्रुतयोर्वाच्यवत्समुदीरितम् ।
विवृता क्षुद्ररुग्भेदे विस्तृते[9] त्वभिधेयवत् ॥
विच्छित्तिः स्यादङ्गरागे[10] विच्छेदे हारभिद्यपि[11] ।
विधूतं कम्पिते त्यक्ते कुटिलेऽपि च वाच्यवत् ॥

---

१ ख. नि । २ ख. ज्ञः । ३ ख. गवत्यपि ।
४ क. घृतं । ५ ख. पिट । ६ ख. स्त ।
७ चण्डे, इति मा. । ८ यतिनास्वपि, इति मा. ।
९ ख. स्तृते । १० हारे, इति मा. । ११ ख. दहारभेदयोः ।

विक्रान्तस्तु भवेच्छूरे विगतस्तु गतस्पृहे ।
वियत् स्यान्नभसि क्लीबे विभूतिर्भूतिभस्मनोः ॥
विहितं कृतमात्रेऽपि विद्रुतं तु पलायिते ।
वृत्तान्तः[1] स्यात्प्रकरणे कार्त्स्न्यवार्ताप्रभेदयोः ॥
प्रस्तावे वेष्टितं रुद्धे लासके करणान्तरे ।
वेल्लितं गमने प्रोक्तं कुटिले[2] विधुते त्रिषु ॥
वेधितं कृतवेधे स्याद्वेपितं तु विकम्पिते ।
वेशन्तः पल्वले प्रोक्तो वेणितोऽपि[3]-विगुम्फिते ॥
वैक्रान्तं रत्नभेदे स्याद्वनान्ते तु शरत् स्त्रियाम् ।
शकुन्तः स्यात्पक्षिमात्रे भासपक्षिमहेन्द्रयोः ॥
श्यमन्तो मणिभेदे स्यात्सुप्ते तु शयितो मतः ।
शष्पितं शाद्वलवति [4]निश्वासे श्वसितं भवेत् ॥
शङ्कितं जातशङ्के स्याच्छब्दितं शब्दवत्यपि ।
शाकुन्तः[5] स्यात्सूक्तभेदे शाश्वतं तु निरन्तरे ॥
शिक्षितस्तु विनीते स्याच्छीतला देवताभिदि ।
तथा स्फोटविशेषेऽपि श्रीपतिः पुरुषोत्तमे ॥
श्रीमाँस्तिलकवृक्षे स्यान्मनोज्ञे धनिके त्रिषु ।
शुद्धान्तश्चावरोधे स्याद्रहःकक्षान्तरेऽपि च ॥
शुद्धान्तःकरणे पुंसि शुद्धान्त इति गद्यते ।
विनियुक्तावशेषे तु शेषितं शोषितं पुनः ॥

---

१ क. तं, ख. न्ता, इति मा. । २ ट्टिते, इति मा. ।
३ क. धि । ४ ख. वि । ५ ख. न्ते ।

शुष्कीकृते शोधितं तु गालिते[1] शोभितं तथा ।
सम्पन्नशोभे स्खलितं चलिते भ्रंशवत्यपि ॥
संहतं सङ्गतं चापि दृढे च हृदयङ्गमे ।
संस्कृतो[2] भूषिते शस्ते कृत्रिमे वाच्यलिङ्गकः ॥
क्लीबं तु लक्षणोपेते स्थपतिः कञ्चुकिन्यपि ।
जीवेष्टियाजके[3] शिल्पिभेदे ना सत्तमे त्रिषु ॥
स्थपतिः स्यात्तु सम्राजि स्थगितः स्याद्विगुण्ठिते[4] ।
सङ्घातः पुंसि घाते च संहतौ नरकान्तरे ॥
संवित्तिः प्रतिपत्तौ चाप्यविवादे जनस्य च ।
समाप्तिरवसाने स्यात्सम्पतिः स्यात्समर्थने ॥
स्वरितः स्वरभेदे स्यात्सविता पितृसूर्ययोः ।
स्वनितं स्याच्छब्दवति [5]स्तनितं मेघनिस्वने ॥
[6]समितिः सम्पराये स्यात्सभायां सङ्गमेऽपि च ।
सन्ततिर्गोत्रपङ्क्त्योः स्यात्पारम्पर्येऽपि च स्त्रियाम् ॥
संकृतिः स्याद्गोत्रवृत्तभेदयोः सम्मतं मते ।
संसृतिः सरणे चापि संसारेऽपि मता स्त्रियाम् ॥
[7]संश्रुतं तु प्रतिज्ञाते संविद् ज्ञप्तौ च[8] योषिति ।
सद्गतिः स्यादूर्ध्वगतौ सम्पत्तिर्वैभवे स्त्रियाम् ॥
संपद् [9]भूतौ गुणोत्कर्षे हारभेदे निगद्यते ।
संवित् स्त्रियां प्रतिज्ञायामाचारज्ञानसङ्गरे ॥

---

१ ख. तं । २ ख. ते । ३ ख. यौजिके ।
४ कुण्ठिते, इति मा. । ५ ख. स्व । ६ ख. सू ।
७ ख. सम्मु । ८ ख. तु । ९ ख. ग ।

सम्भाषणे क्रियाकारे सङ्केते नाम्नि तोषणे ।
सङ्ख्याभेदे सप्ततिः स्यात्समूहे [१]संहतिर्मता ॥
सङ्क्रान्तिः स्यात्तु खेटानां राश्यन्तरप्रवेशने ।
नैरन्तर्ये सन्ततं स्यात्सङ्गतं हृदयङ्गमे ॥
स्तभितं स्यात्तु संस्तब्धे स्वधितिः शस्त्रभिद्यपि ।
सम्भ्रान्तं भ्रमणे चापि सम्भृतं[२] सञ्चितेऽर्थवत् ॥
संवीतः स्यात्तु संयुक्ते स्वगतं स्वात्मसङ्गते ।
संहिता स्याद्यथाम्नाये सामन्तो मण्डलाधिपे ॥
स्थापितं निश्चये न्यस्ते स्वायत्ते साधितं मतम् ।
स्वादितं तु कृतास्वादे सातितः - - - - - ॥
आसादिते सादितं स्यात्सारितं[३] तु विदूरिते ।
साकेतं स्यादयोध्यायां सामन्तो मण्डलाधिपे ॥
सिकता स्त्री सिकतिले वालुकायां च भूमनि[४] ।
सिद्धान्तः स्यान्निश्चितेऽर्थे स्तिमितो निश्चले मतः ॥
सीमन्तः स्त्रीकेशवेशे[५] सिञ्जितं भूषणध्वनौ ।
सुरता स्यात्तु देवत्वे सुरतो भक्तिमत्यपि ॥
सुरतं स्यान्निधुवने सुकृतं शुभपुण्ययोः ।
सुव्रता सुखदोह्या[६] गौः सुव्रता शोभनव्रता ॥
सुहितस्तु भवेत्तृप्ते सुहुतस्तु हुतेऽनले ।
सुहृतः सम्यगाहृते सुरुतः अव्यवाच्यपि ॥

---

१ ख. संम । २ ख. ते । ३ ख. दितं ।
४ ख. ञ्जि च । ५ मध्ये, इति मा. । ६ ख. ग्धा ।

सुगतस्तु जिने प्रोक्तः सुमतिर्बुद्धिमत्यपि ।
सुदती[1] स्यात्तु योषायां सुव्रतं मङ्गले प्रिये ॥
सुभूतं स्यात्परित्राते सुनीतिर्ध्रुवमातरि ॥
तथैव शोभननये[2] सुक्षितिर्देवतान्तरे ॥
हरितं शाकभेदे स्याद्धरिद्वर्णयुते तथा ।
हरिता स्याच्च दूर्वायां स्त्रियां दिशि हरिद् मता ॥
हयवर्णविशेषेऽपि यवसेऽपि हरिद् मतम् ।
हसन्त्यङ्गारधान्यां स्यान्मल्लिकाशाकिनीभिदोः ॥
हर्षितं तु भवेद्दग्धे हर्षयुक्तेऽन्यलिङ्गवत् ।
[3]हारीतः पक्षिभेदे स्यान्मुनिभेदे च कैतवे ॥
हृषितं विस्मये प्रीते प्रहते हृष्टलोमनि[4] ।
क्षतक्षणे तु[5] क्षणितः क्षमिता पुंसि यः क्षमी ॥
क्षयितं तु क्षयं नीते क्षमितं[6] स्यात्क्षमाश्रये ।
क्षारितं [7]च्याविते क्षारैरभिशस्तेऽपि च त्रिषु ॥
क्षारितं मलहीने स्यात्क्षुरितं क्षुरसंस्कृते ।
क्ष्वेडितं सिंहनादे स्यात्क्षोदितं परिशोधिते[8] ॥
क्षोभितं क्षोभयुक्ते स्याद्वाच्यलिङ्गत्वमीदृशाम् ।

॥ इति तद्दतीयम् ॥

---

१ ख. न्तौ । २ क. यने, ख. यभे, इति मा. ।
३ ख. ह । ४ ख. म्नि च । ५ क. णस्तु ।
६ ख. यितं । ७ ख. चा । ८ ख. भिते ।

॥ अथ तचतुर्थम् ॥

अपस्नातो मृतस्नातेऽपहृते स्यादयाहृतम् ।
पराभूतेऽभिभूतः[१] स्यादभीष्टे स्यादभीष्टितम् ॥

सम्मूर्च्छनेऽभिव्याप्तिः स्यादवध्वस्तोऽवचूर्णिते ।
अतिरिक्तः समधिकेऽतिपातः स्यादुपात्यये ॥

[२]अहर्पतिश्चित्रभानावंशुमानपि गद्यते ।
सम्मते स्यादनुमतं सम्प्राप्तेऽधिगतं विदुः ॥

अवज्ञाते त्ववगतं द्वेष्येऽक्षिगत ईरितः ।
अभिनीतस्त्रिषु न्याय्ये[३] संस्कृतामर्षिणोरपि ॥

अभिजातः[४] कुलीने स्यान्याय्य[५]पण्डितयोस्त्रिषु ।
अभियुक्तः पररुद्धे तत्परेऽप्यभिधेयवत्[६] ॥

अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च ।
अपध्वस्तः परित्यक्ते [७]निन्दितेऽप्यवचूर्णिते ॥

अधिक्षिप्तः प्रणिहिते कुत्सिते भर्त्सिते त्रिषु ।
[८]अम्बूकृतं सनिष्ठीवे तथाम्बुबहुलीकृते ॥

[९]दर्पेऽप्यहङ्कृतिः सालपर्ण्यामंशुमती स्मृता ।
[१०]क्षमार्चयोरपचितिर्निष्कृतिव्ययह्रानिषु[११] ॥

---

१ तं । २ ख. अहःप । ३ ख. ये । ४ ख. ज्ञातः ।
५ क. पिण्डी, ख. पौण्डि, इति मा. । ६ ख. धीयते ।
७ विदि, इति मा. । ८ ख. पु. पाठः ।
९ क. पु. अंसुमान् भास्करे शाल, इति पाठान्तरम् ।
१० क. त्वया । ११ ग्रहानिषु, इति मा. ।

स्याच्चानुमतिरूनेन्दुपूर्णिमानुज्ञयोरपि ।
[1]सावधाने त्ववहितोऽप्यनुयातोऽनुगन्तरि ॥

अभिशस्तिः प्रार्थनापवादयोश्च स्त्रियां मता ।
स्यादथावसितमृद्धे ज्ञाते चाप्यवसानगे[2] ॥

स्याच्चैवार्थपतिर्भूमीनाथे चार्थस्य पातरि ।
अवदातं सिते गौरे विशुद्धेऽप्यन्यलिङ्गवत् ॥

अवगीतं[3] च निर्वादे दुष्टगर्हितयोरपि ।
अन्तर्गतं[4] विस्मृते[5] स्यान्मध्यप्राप्ते[6] च वाच्यवत् ॥

अङ्गारितं तु दग्धे स्यात्पलाशकलिकोद्गमे ।
अपावृत्तस्त्वपहिते[7] स्वतन्त्रेऽपि च वाच्यवत् ॥

गवेषितेऽन्वेषितं स्यात्सम्प्राप्तेऽवनतं विदुः ।
कार्ये नियुक्तो[8]ऽधिकृतो वारिवाहे तथाम्बुभृत्[9] ॥

आयुष्मान् योगभेदे स्याच्चिरजीविनि वाच्यवत् ।
आसादितं भाविते स्यात्सम्प्राप्तेऽपि च वाच्यवत् ॥

अक्षारितोऽभिशस्तेऽपि त्ववाग्रेऽभ्यानतं मतम् ।
आशंसिताऽऽशंसुनि स्यादान्दोलितस्तु कम्पिते ॥

आकम्पिताघूर्णितौ च कम्पितार्थौ मतावुभौ ।
इलापतिर्भूपमात्रे विशेषेऽपि महीपतेः ॥

---

१ ख. पु. पाठः ।　२ ख. के ।　३ ख. पीतं ।
४ ख. गीतं ।　५ ख. स्तृते ।　६ ख. प्राप्तौ ।
७ हृते, इति मा. ।　८ क. क्तौ ।
९ ख. पु. इतःपरं, अंशुमती शालिपर्ण्यामंशुमान्सविता यथा, इति पाठः ।

इन्द्रजिद्रावणसुते गरुडेऽपि निगद्यते ।
उमापतिर्महेशे स्यादनिरुद्ध उषापतिः ॥

उपवीतमुत्तरीये चोपश्रुतमुपगतं च विदिते स्यात् ।
उरीकृतमूररीकृतमिव मतमङ्गीकृते [१]वैतत् ॥

उपाहितोऽनलोत्पाते पुमानारोपिते त्रिषु ।
उपाकृतोऽध्वरहते पशौ नोपद्रुते त्रिषु ॥

उदास्थितः प्रतीहारे प्रव्रज्यावसितेऽपि च ।
[२]उद्ग्राहितमुदीर्णेऽपि बद्धग्राहितयोरपि ॥

समृद्धे[३] स्यादुपचितं परिदग्धे च वाच्यवत् ।
उज्जृम्भितं समुत्फुल्ले स्याच्चेष्टायां नपुंसकम् ॥

व्यसनार्ते तूपरक्तो राहुग्रस्तेन्दुसूर्ययोः ।
उपसत्तिस्तु[४] सेवायां सङ्गमात्रेऽपि योषिति ॥

उद्वाहितः कृतोद्वाहे कम्पितोत्कम्पिते समे ।
ऊर्ध्वासितोऽपि गदितो बुधै राजपटोलके ॥

ऋष्यप्रोक्ता शतावर्यां शूकशिम्ब्यां च योषिति ।
तथैवातिबलायां स्याद्वसुमाताऽदितावपि ॥

ऐरावतोऽभ्रमातङ्गे [५]लकुचे नागरङ्गके ।
नागभेदे च गदितो [६]विद्युत्तद्भेदयोः स्त्रियाम् ॥

नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने ।
कलधौतं कनकवद्रजतेऽपि प्रकीर्तितम् ॥

---

१ ख. चै । २ ख. उद्गीर्णे । ३ ख. द्धे ।
४ त्तिस्तु, इति मा. । ५ क. उ । ६ ख. वियु ।

छेदो हस्तेन सस्यानां कटहस्त इतीरितः ।
कोशकारे कोटभर्ता गदितो धीवरैरपि ॥

कुहरितं निगदितं [1]पिकालापे रतध्वनौ ।
कुमुद्वती कुमुदिनीकुशपत्न्योः[2] स्त्रियां मता ॥

कुमुद्वान् कुमुदप्राये देशे तु स्यात्पुमानयम् ।
कृष्णवृन्ता तु पाटल्यां [3]माषपर्ण्यामपीरिता ॥

गन्धवती सुराव्यासमातृभूषु पुरीभिदि ।
गवेषितं स्यादन्विष्टे वह्नौ गृहपतिः पुमान् ॥

तथा गृहपतिः प्रोक्तो गृहस्थेऽपि च सत्रिणि ।
गोपायितं रक्षिते स्याच्चन्द्रकान्तं महोत्पले ॥

चन्द्रकान्तस्तु पुंसि स्यान्मणिभेदे च कैरवे ।
चन्द्रकान्ता तु रोहिण्यां कुमुदिन्यां तथा दिवि ॥

चर्मण्वती सरिद्भेदे कदलीपादपे स्त्रियाम् ।
चित्रगुप्तः श्राद्धदेवे तथा तस्य च लेखके ॥

ज्योतिष्मती लताराज्योश्चन्द्रे तारापतिर्मतः ।
दिवाकीर्तिस्तु पुंसि स्यान्नापितान्तावसायिनोः ॥

दिवाभीतः कुम्भिले स्यादुलूके कुमुदाकरे ।
द्वीपवान् सिन्धुनद्योर्द्वीपवत्यापगाभुवोः ॥

दृषद्वती नदीभेदे तथा कात्यायनीभुवोः ।
स्याद्धूमकेतुरुत्पातभेदे वैश्वानरेऽपि च ॥

---

१ ख. पिक । २ ख. ल्यो । ३ ख. माष ।

कुबेरे स्याद्धनपतिस्तथा स्याद्धनवत्यपि ।
नन्द्यावर्तो [1]वेश्मभेदे तथाच तगरद्रुमे ॥

नदीकान्तः समुद्रे स्याद् हिज्जले [2]सिन्धुवारके ।
नदीकान्ता स्त्रियां जम्बां काकजङ्घौषधावपि ॥

नागदन्तो द्विपरदे गृहान्निर्गतदारुणि ।
नागदन्ती तु कुम्भायां हस्तिन्यामपि योषिति ॥

निस्तुषितं त्वभित्यक्ते[3] त्वग्विहीने लघूकृते[4] ।
निराकृति[5] रनाकारेऽप्यस्वाध्याये[6] निवारणे ॥

परिपीतं तु निष्पीते [7]परिस्तीर्णे परिश्रितम् ।
परिगीतं संस्तुते परावृत्तं पुनरागते ॥

परिध्वस्तमपध्वस्ते निराकृति पराकृतम् ।
भवेत्परिगतं प्राप्तौ विस्मृतज्ञातचेष्टिते ॥

अथ प्रणिहितं न्यस्ते [8]प्राप्तेऽपि च समाहिते ।
लाक्षारक्ते पल्लवितं तथा सपल्लवे तते ॥

[9]प्रतिहतं तु [10]द्विष्टे स्यात्प्रतिस्खलितरुद्धयोः ।
प्रतिक्षिप्तं वारिते[11] स्यात्प्रोषिते[12] पञ्चकं त्रिषु ॥

परिवर्तो विनिमये कूर्मराजे पलायने ।
परिस्नुता[13] स्याद्वारुण्यां[14] स्यन्दे[15]स्यादभिधेयवत् ॥

---

१ ख. वेश्म । २ सिन्दु, इति मा. । ३ व्यक्ते, इति मा. ।
४ षिते, इति मा. । ५ ख. ते । ६ ख. य ।
७ क. परिस्तीर्णे, इति पा. नास्ति । ८ क. प्रासे, ख. मासे, इति मा. ।
९ ख. प्रान्ते । १० दु, इति मा. । ११ ख. सिक्ते ।
१२ क. त्रेषिते, ख. प्राक्षिते, इति मा. । १३ श्रुता, इति मा. ।
१४ रुण्यामिति मा. । १५ न्ने, इति मा. ।

पञ्चगुप्तस्तु कमठे तथा चार्वाकदर्शने ।
प्रजापतिस्तु भूपाले दक्षादौ च विधातरि ॥
प्रतिपत्तिः प्रवृत्तौ स्यात्प्रगल्भत्वे च गौरवे ।
पदप्राप्तौ प्रबोधे च सम्प्राप्तावपि कथ्यते ॥
प्रधूपिता क्लेशितायां सूर्यगन्तव्यदिश्यपि ।
अथ प्रव्रजिता मुण्डीतापसीमांसिकास्वपि ॥
प्रतिकृतिः प्रतिनिधिप्रतिकारार्चनास्वपि ।
अथ प्रज्वलितो[1] दीप्ते शिवे पशुपतिर्मतः ॥
बकपुष्पे पाशुपतं पशुपत्यधिदैवते ।
पारिजातः पारिभद्रे तथा देवद्रुमेऽपि च ॥
पारावती गोपगीतौ नदीभिल्लवलीफले ।
पारावतः कलरवे तथा [2]मर्कटतिन्दुके ॥
स्यात्पाशभृत्तु वरुणे प्राणिद्यूतं तु संयुगे[3] ।
वैवस्वते पितृपतिः [4]पुष्पदन्तस्तु दिग्गजे ॥
विद्याधरविशेषे च पूजिते स्यात्पुरस्कृतः ।
अरिग्रस्तेऽभिशस्ते च तथैवाग्रकृतेऽपि च ॥
भगवान्ना जिने पूज्ये गौर्यां भगवती मता ।
अथ भोगवती नागपुरी[5]नद्योरहौ पुमान् ॥
कुट्टिन्यां स्याद्रङ्गमाता वृक्षे रोगान्तरेऽपि च ।
रथगुप्तिर्वरूथे स्यात्पुमान् रतिपतिः स्मरे ॥

१ ख. ते ।   २ ख. कर्मठ ।
३ क. प्राणिद्यूतं ; ख. पाणिसूतं तु संयुते, इति मा. ।
४ ख. पुष्टि ।   ५ ख. वती ।

राजहस्ती निगदितो गजे सद्भिर्मदोत्कटे ।
लक्ष्मीपतिर्वासुदेवे तथाऽमरपतावपि[1] ॥
व्यतीपातो महोत्पाते योगभेदा[2]पमानयोः ।
वनस्पतिर्वृक्षमात्रे विना पुष्पं फलिन्यपि ॥
बहुसुता शतावर्यां बालहस्तस्तु बालधौ ।
वाचस्पतिः सुराचार्ये[3] विष्णुक्रान्तौषधीलयोः ॥
विनिपातोऽवपाते[4] स्याद्दैवादिव्यसनेऽपि च ।
विजृम्भितं विचेष्टायां तथा विकस्वरेऽपि च ॥
विवस्वानर्कसुरयोस्तत्पुर्यां तु विवस्वती ।
विलम्बितं लम्बिते स्यादतीतसमयेऽपि च ॥
विपरीतं प्रसृते स्याद्विवाचाऽप्यन्यथाकृते ।
विश्वगोप्ता हृषीकेशे वैजयन्तो ध्वजे पुमान् ॥
प्रासादे च महेन्द्रस्य पताकायां तु योषिति ।
शक्रधात्रोः शतधृतिः शततन्तु[5]र्बिडौजसि ॥
शुभ्रदन्ती सुदत्यां[6] स्यात्पुष्पदन्तस्य योषिति ।
समुन्नतं वाच्यवत्स्यात्समुन्नीर्णा[7]विनीतयोः ॥
[8]सदागतिर्नार्कवातनिर्वाणेषु सदीश्वरे ।
सरस्वांस्तु नदे वार्धौ नान्यवद्रसिके स्त्रियाम् ॥
वाणीस्त्रीरत्नवाग्देवीगोनदीषु नदीभिदि ।
समुद्रान्ता तु कार्पासीपृक्का[9]दुरालभासु च ॥

---

१ नरपताविति कोशान्तरे। २ दो, इति मा.। ३ ख. र्यो।
४ ख. माते। ५ ख. न्तौ। ६ न्यामिति मा.।
७ र्णा, इति मा. ८ ख. सद्दा। ९ क. स्पृक्का।

समाहितः समाधिस्थेऽप्युक्तःसिद्धान्त आहिते[1] ।
निर्विवादीकृतेऽपि स्यात्समवर्तौ पुमान्यमे ॥
मनुपत्न्यां सत्यवती तथा व्यासस्य मातरि ।
स्वधास्तुतिर्मखे पुंसि समुदीर्णे समुद्धतम्[2] ॥
समाघातो वधे युद्धे सङ्ख्यावान्पण्डिते पुनः[3] ।
सङ्ख्यायुक्ते वाच्यलिङ्गः बुद्धे सुभाषितो मतः ॥
सुभाषितं तु सूक्ते स्यात्सूर्यभक्तोऽर्कपूजके ।
[4]बन्धूके च स्त्रियां सूर्यभक्ता स्यादौषधीभिदि ॥
उत्साहे सूचतन्तुः स्यादिति शब्दज्ञसम्मतम् ।
सेनापतिः कार्तिकेये[5]ऽथानीकाधिकृते पुमान् ॥
हस्तिदन्तो महाकन्दे विषाणे करिणोऽपि च ।
हिमारातिर्[6]वींतिहोत्रे तथा किरणमालिनी ॥
हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः ।
क्षमापतिर्नरपतौ क्षमावान् शेषबुद्धयोः ॥

॥ इति तचतुर्थम् ॥

---

॥ अथ तपञ्चमम् ॥

अव्यवहितं संसक्ते स्यादनन्यवृत्तिरेकाग्रे[7] ।
अथगणितं परिभूतेऽपि न्यक्कृतेऽवमानितं गदितम् ॥

---

१ समस्तमन्यच ।  २ ख. द्धृतम् ।  ३ ख पुमान् ।
४ उत्साह इत्याद्यनन्तरोऽयं मा. पाठः प्रकरणानुरूप्याय प्राग्योजितः ।

अभ्यवहृतं तु गिलितेऽप्यमरावती[1] मतेन्द्रनगरेऽपि ।
अङ्गीकृतेऽवलम्बितमश्विनीसुता(व)मरभिषजौ च ॥
अपराजिता तु दिग्भिद्यपराजितौषधिभिदि च ।
अपराजित ईशान इष्ट्यन्तरे[2] तथाऽजिते गदितः ॥
अवलोकितस्तु गदितो निरीक्षिते लोकनाथेऽपि ।
अञ्जनावती तु गदिता सुप्रतीकस्य योषिति ॥
[3]अब्जिनीपतिरित्युक्तो भानौ च कपिभिद्यपि ।
नैरन्तर्येऽनवरतमित्युक्तं शब्दतत्वज्ञैः ॥
उररीकृतमङ्गीकृतमात्रेऽपि च वाच्यलिङ्गं तत्[4] ।
उपधूपितस्तु मरणासन्नेऽपि परिधूपिते कथितः ॥
अस्तासन्ने समयेऽप्युपधूपितं गदन्त्येके ।
स्याद्गणाधिपतिः पुंसि शङ्करे च विनायके ॥
ज्योतिषाम्पतिरप्युक्तः पुमान् कुमुदिनीपतौ ।
तनूनपाद्दहद्भानौ भानोरपि सुते मतः ॥
गिलिते प्रत्यवसितं नृपतौ पृथिवीपतिः ।
मूर्धाभिषिक्तोऽभिहितोऽभिषिक्ते क्षत्रियेऽपि च ॥
तथा जात्यन्तरे मन्त्रिण्यपि शब्दविदां मतम्[5] ।
मूर्धावसिक्तो विप्रेण क्षत्रियायां भवेत्सुतः ॥
यादसाम्पतिरम्भोधौ पश्चिमाशापतावपि ।
यज्ञोपवीतं गदितं यज्ञसूत्रे नपुंसकम् ॥

---

१ ख. तौन्द्रन । २ ऋष्यन्तरे, इति मा. । ३ अब्ज ।
४ ख. मात्रवाच्यलिङ्गं तत्, इति पा. । ५ क. तः ।

वसन्तदूतश्चूते स्यात्पिकपञ्चमरागयोः ।
वसन्तदूती पाटल्यामतिमुक्ते च योषिति[1] ॥

॥ इति तपञ्चमम् ॥

---

॥ अथ तषष्ठम् ॥

अर्धपारावतश्चित्रकण्ठे तित्तिरपक्षिणि ।
दाक्षायणीपतिश्चन्द्रे कश्यपेऽपि निगद्यते ॥

॥ इति तषष्ठम् ॥

---

॥ अथ तसप्तमम् ॥

समुद्रनवनीतं स्यात्पीयूषरजनीशयोः ॥

॥ इति तसप्तमम् ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये तान्तवर्गः ॥

---

॥ अथ थान्तवर्गः ॥

॥ अथ थैकम् ॥

थं रक्षणे मङ्गले च साध्वसे च नपुंसकम् ।
शिलोच्चये पुमानेव क्वचिच्च भयरक्षके ॥

॥ इति थैकम् ॥

---

१ क. पु. अतिमुक्ते पाटलायामतिमुक्ता मता सतामिति पाठभेदः ।

॥ अथ थद्वितीयम् ॥

मङ्गलार्थेऽथ शब्दः स्यादानन्तर्ये त्वथो ह्यथ ।
अर्थी पुमान्याचके स्यात्सेवके च विवादिनि ॥

अर्थः प्रकारे विषये वित्तकारणवस्तुषु ।
अभिधेयेऽपि शब्दानां निवृत्तौ च प्रयोजने ॥

आस्थाऽवलम्बनास्थानयत्नापेक्षासु गद्यते ।
इत्थं परिष्कृतार्थे स्यादुत्थ [1]उक्तस्तथोत्थिते ॥

कथा स्यात्तु पुरावृत्ते कथं प्रश्नार्थमव्ययम् ।
कन्था मृन्मयभित्तौ स्यादपि प्रावरणान्तरे[2] ॥

क्रथो देशविशेषेऽपि राजन्यपि मतः क्वचित् ।
क्वाथो द्रवस्य [3]निष्पाकेऽप्यतिदुःखे निगद्यते ॥

कुथः प्रवेणीकुशयोः कोथस्तु मथने मतः ।
नेत्ररोगे च [4]सटिते ग्रन्थस्तु ग्रथने मतः ॥

ग्रन्थो धने च सन्दर्भे द्वात्रिंशद्वर्णनिर्मितौ[5] ।
ग्रन्थिः पर्वणि कौटिल्ये ग्रन्थिपर्णे गदान्तरे ॥

गाथा श्लोके संस्कृतान्यभाषायां [6]गेयवृत्तयोः ।
तथेत्यङ्गीकृतौ तीर्थमध्वरक्षेत्रयोरपि ॥

नारीरजस्युपाये च [7]पात्रोपाध्यायमन्त्रिषु ।
अवतारर्षिजुष्टाम्बुविशेषे च निगद्यते ॥

---

१ उत्थ, इति मा. । २ ख. रः । ३ निपा, इति मा. ।
४ तालव्यादिरिति परे । ५ क. र्णितौ ।
६ घोष, इति मा. । ७ तथो, इति मा. ।

तुत्थं स्यादञ्जनभिदि नीलीसूक्ष्मैलयोः स्त्रियाम् ।
दुस्थस्तु दुर्गते मूर्खे यश्च दुःखेन वर्तते ॥
प्रस्थोऽस्त्रियां मानभेदे पाथो[1]ऽर्केऽग्नौ जलेऽपि च ।
पार्थस्तु ककुभे जिष्णौ पार्थं सत्यवचस्यपि ॥
पृथुर्भूपे कृष्णजीरे वाप्यां[2] पृथुर्महत्यपि ।
प्रोथश्च हयघोणायां कट्यामप्यध्वगे मतः ॥
मन्थः स्याद्द्रवमन्थाननेत्रामयरविष्वपि ।
तत्रैव गदितो विज्ञैर्मथिश्चापि मथोऽपि च ॥
यूथी पुष्पप्रभेदेऽथ यूथं तिर्यक्समूहके ।
तुल्यार्थे तु यथेत्याहुः [3]स्यन्दने वेतसे रथः ॥
तथा पुमानवयवे रथी तु रथसादिनि ।
वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः ॥
[4]संस्था स्थितौ चरे नाशे व्यक्तिसादृश्ययोरपि ।
सार्थो[5] वणिक्समूहे स्यादपि सङ्घातमात्रके ॥
सिक्थं नील्यां[6] मधुच्छिष्टे सिक्थ ओदनसम्भवे ।

॥ इति थद्वितीयम् ॥

---

॥ अथ थतृतीयम् ॥

अव्यथो निर्व्यथे[7] सर्पे [8]चारटीपथ्ययोरपि ।
अतिथिर्नृपभेदे स्यादागन्तावतिथिर्मतः ॥

---

१ ख. थो । २ ण्यामिति मा. । ३ क. स्य ।
४ ख. सु । ५ ख. र्थो । ६ ख. त्यां ।
७ ख. थः । ८ चर्वं, इति मा. ।

अश्वत्थः पिप्पलतरावश्वत्था पूर्णिमातिथौ ।
अन्यथा वैपरीत्ये स्यादपथं कुपथे मतम् ॥
आसन्दी[१] लघुखट्वायां मता[२] शाब्दिकमण्डनैः[३] ।
उन्माथो[४] घातके कूटयन्त्रे चाप्यथ[५] सारथौ ॥
उपस्थः [६]शेफसि क्रोडे मतो मदनमन्दिरे ।
उद्रथः स्यात्ताम्रचूडे रथकीलेऽपि कीर्तितः ॥
कायस्थो[७] जातिभेदे स्यात्कायस्थः परमात्मनि ।
कायस्था तु हरीतक्यां कायस्थं देहसंश्रिते[८] ॥
गोग्रन्थिर्ना करीषे स्याद्गोष्ठे [९]गोजिह्विकौषधौ ।
दमथस्तु दमे [१०]दण्डे निशीथो रात्रिमात्रके ॥
अर्धरात्रेऽपि निर्ग्रन्थो नग्ने बालिशनिःस्वयोः ।
प्रत्यर्थी वाच्यलिङ्गः स्याच्छत्रौ च प्रतिवादिनि ॥
मन्मथः कामचिन्तायां कुपित्थे[११] कुसुमायुधे ।
वरूथो[१२] रथगुप्तौ स्याद्वरूथं चर्मवेश्मनोः ॥
वमथुः पुंसि वमने हिक्कायां गजसीकरे[१३] ।
वयस्थो वाच्यवचूनि वयस्था शाल्मलीद्रुमे ॥
ब्राह्मीगडूचीकाकोलीसूक्ष्मैलाऽऽमलकीषु च ।
विदथो[१४] योगिकृतिनोर्वैय्यर्थ्ये[१५] वितथं मतम् ॥

---

१ ख. वी । २ ख. तः । ३ ख. लैः ।
४ क. न्मथो । ५ ख. पि च । ६ ख. सेफ ।
७ ख. स्था । ८ ख. तं । ९ ख. गोजिह्व ।
१० ग, इति मा. । ११ ख. त्थि । १२ क. रुथो ।
१३ शीकरे । १४ तथो, इति मा. । १५ ख. र्थे ।

शमथः सचिवे शान्तौ षड्ग्रन्थस्तु[1] करञ्जके ।
वचायामपि षड्ग्रन्था समर्थोऽपि[2] हितेऽपि च ॥
सम्बन्धार्थेऽपि शक्तेऽपि गदितो वाच्यलिङ्गकः ।
सिद्धार्थो मुनिसिंहे स्यात्सिद्धार्था सितसर्षपे ॥
क्षवथुर्ना क्षुते कासे क्षुस्रार्थः शास्त्रवेत्तरि ।

॥ इति थतृतीयम् ॥

---

॥ अथ थचतुर्थम् ॥

अनीकस्थो रणगते गजशिक्षाविचक्षणे ।
राजरक्षिणि[3] चिह्ने च वीरमर्दनके[4]ऽपि च ॥
भवेदितिकथा [5]नष्टधर्मेऽपार्थवचस्यपि ।
अश्रद्धेयेऽप्युदरथिः समुद्रे च वियन्मणौ ॥
चतुष्पथं चतुर्मार्गे सङ्गमे ब्राह्मणे पुमान् ।
अथ चित्ररथः [6]सूर्यगन्धर्वान्तरयोरपि ॥
जयद्रथो भूपभेदे कथितो भारतादिषु ।
दशमीस्थो नष्टबीजे स्थविरेऽपि निगद्यते ॥
[7]दीनानाथस्त्वभिज्ञैश्च मूषिकेऽप्यभिधीयते ।
मणिग्रन्थिस्तु मुण्डायां यथार्थे तु यथातथम् ॥
वानप्रस्थो मधुष्ठीले स्यात्तृतीयाश्रमेऽपि च ।

॥ इति थचतुर्थम् ॥

---

१ ख. ग्र्थे तु । २ क. भिद्व । ३ ख. त्तग । ४ क. को ।
५ नस्ठे, इति मा. । ६ सूर्ये, इति मा. । ७ ख. पु. पा. ।

॥ अथ थपञ्चमम् ॥

यद्याचामङ्गलं साम तदप्रतिरथं विदुः ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये थान्तवर्गः ॥

---

॥ अथ दान्तवर्गः ॥

॥ अथ दैकम् ॥

दुःशब्दो दुष्टवचनो दुशब्दस्तु तरावपि ॥

---

॥ अथ दद्वितीयम् ॥

अब्दः संवत्सरे वारिवाहमुस्तकयोरपि।
[1]अन्दुर्भूषणभेदे स्यान्निगडे तु मता स्त्रियाम् ॥
अदः स्यादिदमर्थेऽपि स्याददस्त्वदने पुमान्।
अदः स्यात्प्रथमे त्वेतदर्थे स्यादिदमव्ययम् ॥
कन्दोऽस्त्री [2]स्मरणे धान्यमूले जलधरेऽपि च।
कुन्दश्चक्रे [3]भ्रमे माघ्ये निधिभेदे सुरद्विषि ॥
गदः कृष्णानुजे रोगे गदा स्यादायुधान्तरे।
गोदा गोदावरीनद्यां गोदा योषिति गद्यते ॥
छदः[4] पलाशे गरुति ग्रन्थिपर्णतमालयोः।
छन्दो [5]वशेऽप्यभिप्राये वेदे वृत्ते निगद्यते ॥

---

१ क. अन्दूर्दू। २ सूरण इति कोशान्तरे।
३ क्रमे, इति मा.। ४ ख. गदः। ५ वत्ते, इति मा.।

छदिः पिधाने छर्दिः स्याद्वमनेऽपि मता स्त्रियाम् ।
तुन्दं स्यादुदरे तोदस्तोदने पुंसि गद्यते ॥
नदी सरिति शोणादौ ना नन्दा [1]स्यादलिञ्जरे ।
गौर्यां तिथिविशेषे स्त्री नन्दो[2] गोपान्तरे मतः ॥
नन्दिर्हरप्रतीहारे [3]द्यूते भाण्डे वटद्रुमे ।
नान्दी तु मङ्गलश्लोके स्त्रियां [4]नादस्तु निस्वने ॥
निन्दा स्यादपवादेऽपि कुत्सायामपि योषिति ।
पदं शब्दे च वाक्ये[5] च व्यवसायापदेशयोः ॥
[6]पादतच्चिह्नयोः स्थानत्राणयोरङ्क[7]वस्तुनोः ।
श्लोकपादेऽपि च क्लीबं पुल्लिङ्गः किरणे मतः ॥
पादो [8]बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते ।
बिन्दुस्तु दन्तदशने[9] तथा वेदितृविप्रुषोः ॥
भ्रुवोर्मध्ये रूपकाव्य[10]कृतौ चापि निगद्यते ।
[11]भिदिर्भेदिश्च कुलिशे शब्दवेदिन ऊचिरे[12] ॥
भेदो द्वैधे विशेषे स्यादुपजापे विदारणे ।
कल्याणशर्मणोर्भद्रं[13] मदो[14] रेतसि गद्यते ॥

---

१ ख. स्यात्क । २ ख. दो । ३ गर्दं, इति मा. ।
४ ख. नान्द । ५ क. च्ये । ६ क. प । ७ क. रङ्ग ।
८ ख. ब्रध्ने । ९ क. लिस्यात्, ख. च्चुत्ते स्यात्, इति मा. ।
१० कार्थे इति कोशान्तरे । ११ ख. पु. सार्द्धश्लोको नास्ति ।
१२ बुधिरे, इति मा. । १३ भेंदं, इति मा. ।
१४ मतो, इति मा. ।

कस्तूर्यामपि गर्वे च तथा हर्षेभदानयोः।
मन्दो मूर्खे [1]त्वतीक्ष्णे च स्वैरे चाभाग्यरोगिणोः॥
अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ।
मृदुः स्यात्कोमलेऽतीक्ष्णे मेदो धात्वन्तरे पुनः॥
मोदो गणेश्वरभिदि प्रमोदे मोद उच्यते।
जलजन्तुनि यादः स्याद्रदो दन्ते विलेखने॥
वन्दा लतान्तरे प्रोक्ता भिक्षुक्यामपि कीर्तिता।
विदा ज्ञाने च निर्दिष्टा मनीषायां च योषिति॥
वेदः श्रुतौ च [2]वित्तौ च वेदिः पुंसि च पण्डिते।
वेदिरङ्गुलिमुद्रायां स्यात्परिष्कृतभूतले॥
शादस्तु विषभेदे स्याच्छादः कर्दमशष्पयोः।
श्रीदः श्रीमति निर्दिष्टस्तथा पुण्यजनेश्वरे॥
[3]स्यदो जवे निगदितः सादस्तु स्याद्विनाशने।
स्वादुर्मिष्टे मनोज्ञे च गद्यते वाच्यलिङ्गकः॥
सादी तुरङ्गमातङ्गरथारोहेषु चोच्यते।
सूदस्तु व्यञ्जने[4] प्रोक्तस्तथा स्यात्सूपकारके॥
स्वेदस्तु स्वेदने घर्मे ह्रदस्तु स्याज्जलाशये।
[5]हृद् बुक्कचित्तयोः क्लीबं क्षोदः पुंसि रजस्यपि॥

॥ इति दद्वितीयम्॥

---

१ च, इति मा.। २ वृत्ते इति कोशान्तरे। ३ ख. पु. पा.।
४ ख. जने। ५ क. हृत् वृक, ख. हृत्वृक्का, इति मा.।

॥ अथ दतीयम् ॥

अङ्गदो वालितनये केयूरे तु नपुंसकम् ।
अङ्गदा याम्यदिग्दन्तियोषायां समुदाहृता ॥
अर्बुदः स्यान्मांसकीले दशकोटिषु पर्वते ।
अर्धेन्दुश्चन्द्रखण्डे स्याद्गलहस्तनखाङ्कयोः ॥
अर्धेन्दुः स्यादतिप्रौढस्त्रीगुह्याङ्गुलियोजने ।
[1]आमन्दो वासुदेवे स्यात् [2]खट्वाभेदे च योषिति ॥
आक्रन्दो दारुणरणे मित्रे [3]भ्रातरि रोदने ।
आस्पदं[4] स्यात्पदे कृत्य आमोदो गन्धहर्षयोः ॥
ककुद्मत्ककुदं श्रेष्ठे वृषाङ्गे [5]राजलक्ष्मणि ।
कपर्दः खण्डपरशो[6]र्जटाजूटे वराटके ॥
कर्णान्दुरुत्क्षिप्तिकायां कर्णपाल्यामपि स्त्रियाम् ।
क्रव्यादः स्याद्राक्षसवन्मांसासिन्यभिधेयवत् ॥
करदो जितभूपाले करदः[7] करदातरि ।
कामदा स्यात्कामधेनौ वाच्यवत्कामदातरि ॥
कुमुदं कैरवे रक्तपद्मे स्त्री कुम्भिकौषधे ।
[8]गाम्भार्यामपि दिङ्नागे नागे शाखामृगान्तरे ॥
कुसीदं जीवने वृद्ध्या कुसीदस्तु कुसीदिके[9] ।
सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः ॥

---

१ क. अ । २ अद्धा, इति मा. । ३ त्रा, इति मा. ।
४ ख. स्पन्दः । ५ क. राज्य । ६ शो, इति मा. ।
७ ख. दा । ८ गम्भार्यामिति मा. । ९ दके, इति मा. ।

कौमुद्युत्सवभेदे स्याच्चन्द्रिकायां च कौमुदी ।
कौमुदः कार्तिकेये स्याद्गरदो विषदातरि ॥
गोविन्दः स्याद्वासुदेवे गवाध्यक्षे च गीष्पतौ ।
गोष्पदं गोपदश्वभ्रे गवां च गतिगोचरे ॥
गोनर्दमपि कैवर्त्तीमुस्तके[1] पुंसि सारसे[2] ।
जलदो मुस्तके मेघे जीवदो वैद्यविद्विषोः ॥
तोयदो [3]मुस्तके मेघ [4]आज्ये तु स्यान्नपुंसकम् ।
तोषदं तु घृते प्रोक्तं तोषदस्तुष्टिकर्तरि ॥
दारदो विषभेदे स्यात्पारदे हिङ्गुलेऽपि च ।
दायदस्तु सपिण्डे स्याद्दायादस्तनयेऽपि च ॥
धनदस्तु कुबेरे स्याद्धनदातरि च स्मृतः ।
नर्मदः केलिसचिवे स्त्रियां तु सरिदन्तरे ॥
कामिन्यां, नलदं पुष्परसमांसी[5]जलेष्वपि ।
निर्वादो लोकवादेऽपि तथाच परिनिष्ठिते ॥
[6]निष्यन्दः स्यात्स्वेदजले निःष्यन्दः स्यन्दवर्जिते ।
निर्वेदः स्यादुपरतौ निर्मदो मदवर्जिते ॥
निषादः[7] स्यात्तु चाण्डाले स्वरभेदे च धीवरे ।
प्रमदा स्यात्तु योषायां मत्तसम्मदयोरपि[8] ॥
प्रसादोऽनुग्रहे [9]काव्यप्राणस्वास्थ्यप्रसक्तिषु ।
प्रमादोऽनवधानेऽपि प्रवादो जनभाषणे ॥

---

१ ख. मस्तके । २ ख. क । ३ ख. म ।
४ घे राज्ये, इति मा. । ५ ख. सि । ६ ख. पु. पा. ।
७ ख. दं । ८ पुंसीति शेषः । ९ काव्यगुण इत्यपरे ।

प्रणादस्तारशब्दे स्यात्तथैव श्रवणामये ।
प्रह्लादः [1]प्रणादे दैत्ये [2]निध्वानेऽपि निगद्यते ॥
प्रासादो देवनृपतिगेहेऽथ वरदा स्त्रियाम् ।
कन्यायां वाच्यलिङ्गस्तु प्रसन्नेऽपि समर्धके[3] ॥
[4]माकन्दः सहकारे स्त्री धात्रीनगरभेदयोः ।
मुकुन्दो निधिभिद्विष्णुरत्नभेदेषु कुन्दुरौ ॥
मेनादस्तु भवेत्केकि[5]मार्जारच्छागलेषु च ।
विशदः पाण्डुरे[6] व्यक्ते [7]विवादः संशयोक्तिषु ॥
शारदोऽब्दे शरज्जातनूतनाप्रतिभेषु च ।
शरद्वच्छारदा[8]ऽपि स्यान्नियता जलदात्यये ॥
अथ स्याच्छारदा[9] तोयपिप्पलीसप्तपर्णयोः ।
षड्बिन्दुः पुण्डरीकाक्षे [10]कीटभेदे मतः पुमान् ॥
सम्भेदः स्फुटने प्रोक्तः सम्भेदः सिन्धुसङ्गमे ।
सुनन्देन्दुमतीधात्र्योः सुनन्दा रोचनोमयोः ॥

॥ इति दतृतीयम् ॥

॥ अथ दचतुर्थम् ॥

अष्टापदं च कनके सारीणां फलकेऽपि च ।
अष्टापदश्च [11]सरभे चन्द्रमल्यां च मर्कटे ॥

---

१ ख. प्रा । २ क. निर्ध्वा । ३ ख. र्थके ।
४ ख. ना । ५ मार्जरिच्छगलेषु इति मा. ।
६ ख. ग्डुरे । ७ क. निना । ८ ख. त्सरसा ।
९ दौ, इति मा. । १० ख. क्रीडा । ११ अन्यच तालव्यादिः ।

निन्दायामपवादः स्यादाज्ञाविस्रम्भयोरपि ।
[1]अभिस्यन्दोऽक्षिरोगे स्यादभिवृद्धौ तथाऽऽस्रवे[2] ॥

अभिमर्दः सम्परायेऽप्यवमर्दे च गद्यते ।
महोत्पलेऽरविन्दं स्यादिरिमेदो[3] महीरुहे ॥

उपच्छन्दः प्रार्थनायां गदितस्तत्त्ववेदिभिः ।
तत्काले स्यादेकपदं पदव्यामेकपद्यपि ॥

कटुकन्दस्तु शिग्रौ स्याच्छृङ्गवेररसोनयोः ।
[4]कुरुविन्दो व्रीहिभेदे मुस्ताकुल्माषयोरपि ॥

हिङ्गुले पद्मरागे च मुकुरे च समीरितः[5] ।
अथ कोकनदं रक्तकुमुदे रक्तपङ्कजे ॥

चतुष्पदी तु पद्ये ना पशौ स्त्रीकरणान्तरे ।
भवेज्जनपदो जानपदोऽपि जनदेशयोः ॥

तमोनुदो रवौ वन्हौ तथैव च निशाकरे ।
परिवादः कलङ्के स्याद्वीणावादनवस्तुनि ॥

प्रियंवदः खेचरे स्यात्प्रियवादिनि वाच्यवत् ।
पीठमर्दोऽतिधृष्टे[6] स्यान्नाट्योक्तौ नायकप्रिये ॥

पुटभेदो नदीवक्रे[7] पत्तनातोद्ययोरपि ।
महानादो [8]वर्षुकाब्दे वारणेऽथ महास्वने ॥

---

१ अभिनिविभ्यःस्यन्दतेः षत्वविकल्पादमूर्धन्योऽत्र ।
२ दन्त्यमध्य इत्येके ।
३ क. दा ।
४ कुर, इति मा. ।
५ क्लीबे, इति शेषः ।
६ ख. ष्णो ।
७ क. क्रौ ।
८ ख. वर्ष ।

मकरन्दः पुष्परसे मरन्दवदुदीरितः ।
मुचुकुन्दो वृक्षभेदे मुनिदैत्यविशेषयोः[1] ॥
[2]मेलानन्दो मसिमणौ गदितः शब्दपारगैः ।
मेघनाद[3]स्त्वपान्नाथे दशास्यतनयेऽपि च ॥
तथौषधिप्रभेदे च मिथ्यावादो निरर्थके ।
रसवादो धातुवादे रक्तपादः खगान्तरे ॥
विशारदोऽतिधिषणे धृष्टे चापि निगद्यते ।
मतं विष्णुपदं व्योम्नि क्षीरोदे चाप्यथ स्त्रियाम् ॥
जाह्नव्यां रविसङ्क्रान्तिभेदे च परिकीर्त्यते ।
[4]शशबिन्दुर्वासुदेवे तथा भूपान्तरेऽपि च ॥
शतानन्दो मुनेर्भेदे देवकीनन्दनेऽपि च ।
शतह्रदा त्विन्द्रवज्रे सौदामिन्यां च गद्यते ॥
समर्यादस्तु मर्यादासहिते च समीपगे ।
स्वर्णच्छदस्तु गरुडे वृक्षे सप्तच्छदः क्वचित् ॥

॥ इति दचतुर्थम् ॥

---

॥ अथ दपञ्चमम् ॥

रक्तपारदमित्याहुर्हिङ्गुले[5] शब्दवेदिनः ।
सहस्रपादः कारुण्डे[6] मार्तण्डे यज्ञपूरुषे ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये दान्तवर्गः ॥

---

१ मान्धातृतनयेऽपि चेति केचित् ।
२ मेलानन्दा इति कोशान्तरे ।
३ ख. थ ।
४ क. शक ।
५ क. ठे ।
६ कारण्डे, इत्यपि कोशान्तरे ।

॥ अथ धान्तवर्गः ॥

॥ अथ धद्वितीयम् ॥

अर्धं समांशे खण्डे चाप्यब्धिः सरसि वारिधौ ।
अन्धश्चक्षुर्विहीने स्यादन्धं तु तिमिरे मतम् ॥
अधस्तलप्रदेशे[1] स्यादद्धा[2] स्यान्निश्चयेऽव्ययम् ।
आधिः पुमांश्चित्तपीडाप्रत्याशाबन्धकेषु च ॥
व्यसने चाप्यधिष्ठानेऽपीद्धमातप[3]दीप्तयोः ।
ऋद्धं[4] सम्पन्नधान्ये च सुसमृद्धेऽपि वाच्यवत् ॥
ऋद्धिः स्त्रियां समृद्धौ स्यादपि स्यादौषधीभिदि ।
एधमाहुस्तथा काष्ठ एधः क्लीबे च तद्विदः[5] ॥
गन्धो गन्धक आमोदे लेशे [6]सम्बन्धिगर्वयोः ।
गन्धः श्लाघ्ये च हिंसायामुत्ताने गाधमित्यपि ? ॥
गोधा तले निहाकायां दग्धं [7]प्लुष्टेऽन्यलिङ्गकम् ।
दग्धा स्थितार्कदिशि तु दधि क्षीरोत्तरस्थितौ ॥
श्रीवासवासयो[8]श्चापि दिग्धो बाणे विषान्विते ।
दुग्धं प्रपूरिते क्षीरे दुग्धी क्षीरावि[9]कौषधौ ॥
दोग्धा गोपालके वत्से कवौ वत्सोपजीविनि[10] ।
नद्धो बद्धे तथोद्वृत्ते बन्धस्त्वाधौ[11] च बन्धने ॥

१ ख. भेदे । २ क. दाद्धा । ३ क. दा ।
४ इद्धमिति मा. । ५ तद्विदः क्लीबमेधसा, इति मा. ।
६ सम्बन्ध, इति कोशान्तरे । ७ क. दष्ट, ख. पृष्ठे, इति मा. ।
८ वाससोरिति मा. । ९ ख. धि ।
१० अर्थोपजीविनि, इति परे । ११ ख. दौ ।

बाधा दुःखे निषेधे च बुधो[१] ज्ञे पण्डितेऽपि च ।
बुद्धो जिने[२] लब्धवर्णे बुधिते त्वन्यलिङ्गवत् ॥
बोधिः समाधिभेदे च तथा पिप्पलभूरुहे ।
मधु मद्ये पुष्परसे क्षौद्रे ना तु मधुद्रुमे ॥
वसन्तचैत्रदैत्येषु जीवन्त्यामपि योषिति ।
मिद्धं [३]चित्ताभिसङ्क्षेपे मतमालस्यनिद्रयोः ॥
मुग्धः स्यात्सुन्दरे मूढे, क्रतौ मेधा मतौ स्त्रियाम् ।
राधा विशाखाऽऽमलकीविष्णुक्रान्तासु मासि ना ॥
धन्विनां चित्रभेदे च स्याद्गोपीविद्युतोः स्त्रियाम् ।
राद्धं समृद्धे लुब्धस्तु स्याद्व्याधाकाङ्क्षिणोरपि ॥
लब्धं प्राप्ते बधूर्भार्यास्नुषापृक्काऽङ्गनासु च ।
शटीनवोढयोस्तद्वत्स्त्रियां स्यात्सारिवौषधौ ॥
व्याधिः कुष्ठे च रोगे[४] च व्याधो मृगयुदुष्टयोः ।
विधुर्ना चन्द्रकर्पूरविष्णुष्वपि विधिः पुनः ॥
काले विधाने नियतौ तथैव परमेष्ठिनि ।
विधा गजान्न ऋद्धौ च प्रकारे [५]वेतने विधौ ॥
वृद्धो जीर्णे प्रवृद्धे ज्ञे त्रिषु क्लीबं तु शैलजे ।
वृद्धिः स्याद्वर्धने योगविशेषेऽप्यौषधान्तरे ॥
कालान्तरे चाप्युदये समृद्धावपि योषिति ।
श्रद्धाऽऽदरे[६] च काङ्क्षायां श्राद्धः श्रद्धान्विते त्रिषु ॥

१ क. धे । २ क. नो । ३ ख. चिन्ता ।
४ ख. स्हेऽङ्गरोगे । ५ रेच, इति मा. । ६ ख. घरे ।

हव्यकव्यविधौ क्लीबं शुद्धं तु त्रिषु केवले ।
पवित्रेऽपि च निर्दोषे सन्धा[1] स्थितिप्रतिज्ञयोः[2] ॥
स्पर्द्धा [3]सङ्घर्षणे साम्ये[4] तथा क्रमसमुन्नतौ ।
सन्धिर्भेदे सुरङ्गायां भागसङ्घट्टने[5]ऽपि च ॥
रूपकाणां मुखाद्यङ्गेऽप्यवकाशेऽपि कीर्तितः ।
स्कन्धः स्यान्नृपतावंशे सम्परायसमूहयोः ॥
काये तरुप्रकाण्डे च [6]भद्रादौ छन्दसो[7] भिदि ।
साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत् ॥
सिद्धं स्यात्त्रिषु निष्पन्ने पुमान् व्यासादियोगयोः ।
स्निग्धं त्रिषु स्नेहयुते चिक्कणेऽपि निगद्यते ॥
सिन्धुर्वमथुदेशाब्धिनदेषु सरिति स्त्रियाम् ।
सिद्धिः स्त्री योगनिष्पत्योरणिमादिषु [8]चेष्यते ॥
सुधाऽमृते [9]स्नुहीमूर्वालेपगाङ्गेष्टिकासु[10] च ।
क्षुधा तु स्याद्बुभुक्षायामिच्छायां च मता क्वचित् ॥

॥ इति धद्वितीयम् ॥

---

॥ अथ धतृतीयम् ॥

अवधिः सीम्नि काले स्यादवधाने बिले पुमान् ।
[11]समेऽंशकेस्यादर्धार्धमबद्धं स्यादनर्थके ॥

---

१ न्ध्या, इति मा. । २ भेदयोरिति मा. ।
३ संहर्षणे, इति विश्वः । ४ त्मो, इति मा. ।
५ ख. हने । ६ भ्राचा, इति मा. ।
७ ख. सां । ८ ख. चोच्य । ९ स्नुहीदू, इति मा. ।
१० मश्वेष्टिकासु, इति मा. । ११ ख. पु. पाठः ।

अगाधमतलस्पर्शे त्रिषु श्वभ्रे नपुंसकम् ।
आनद्धं स्याद्बद्धमात्रे तथैव मुरजादिके ॥
आविद्धं वाच्यवज्ज्ञेयं कुटिले च पराहते ।
आबन्धो दृढबन्धे स्यात्प्रेमालङ्कारयोरपि ॥
[1]उत्सेधस्तूच्छ्रये काये क्लीबं [2]संहननेऽपि च ।
उपाधिर्धर्मचिन्तायां [3]विभवेऽपि विशेषणे ॥
कुटुम्बव्यापृतेऽपि स्यादुपधिर्व्याजचक्रयोः[4] ।
कबन्धोऽस्त्री क्रियायुक्तेऽप्यपमूर्धकलेवरे ॥
क्लीबं जले पुंस्युदरे राहुरक्षोविशेषयोः ।
दुर्विधस्तु खलेऽपि स्याद्दुर्गते वाच्यलिङ्गकः ॥
न्यग्रोधो व्यामवटयोः स्त्रियां शम्युपचित्रयोः ।
मोहनाख्यौषधे चापि निरोधो नाशरोधयोः ॥
निषधः कठिने देशे तद्राजेऽपि नगान्तरे ।
परिधिर्यज्ञियतरुशाखायामुपसूर्यके ॥
प्रसिद्धो भूषिते ख्याते[5] प्रणिधिर्ना चरेऽर्थने[6] ।
मगधः स्याद्देशभेदे वाच्यवन्मगधोद्भवे ॥
मागधी तु कणायूथ्योः[7] पुंसि जीरकबन्दिनोः[8] ।
तथा वैश्यात्क्षत्रियाजे विबुधो ज्ञे सुरेऽपि च ॥

---

१ उच्छ्रेदस्तु, इति मा. ।
२ ख. संनह्न ।
३ कैतवे, इति परे ।
४ व्याधिचक्रयोरिति मा. ।
५ क. तो ।
६ खले, इति मा ।
७ ख. थ्योः ।
८ क. न्धिनोः ।

वीवधो विवधश्चोभौ पर्याहारेऽध्वभारयोः[१] ।
विस्रब्धो[२]ऽनुत्कटेऽपि स्याद्गाढविश्वस्तयोरपि[३] ॥

सन्नद्धो वर्मिते व्यूढे सम्बाधः सङ्कटे भगे[४] ।
सन्निधिस्तु पुमान्सन्निधानेऽपीन्द्रियगोचरे ॥

संसिद्धिः प्रकृतौ सिद्धौ [५]मदोग्रायां स्त्रियामपि ।
संरोधो[६] रोधने क्षेपे समाधिर्ना समर्थने ॥

ध्याने वैरस्य[७] नियमे काव्यस्य च गुणान्तरे ।
सुगन्धिः स्यादिष्टगन्धे त्रिषु [८]क्षीरे नपुंसकम् ॥

॥ इति धतृतीयम् ॥

---

॥ अथ धचतुर्थम् ॥

अवरोधो निरोधे स्याच्छुद्धान्ते राजवेश्मनि ।
[९]अवष्टब्धोऽविदूरे स्यादाक्रान्ते चाविलम्बिते ॥

स्यादनिरुद्ध उषाया नाथे [१०]चानर्गले चापि ।
हिक्कायानुबन्धी तृष्णायामपि योषिति ख्याता ॥

[११]दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादेर्विनश्वरे ।
मुख्यानुयायिनि शिशौ [१२]प्रवृत्तस्यानुवर्तने ॥

---

१ ख. पु. राध्वभारिणोः । २ तालव्यमध्योऽपि कोशान्तरे ।
३ श्वासयोरपि, इति मा. । ४ टोरगे, इति मा. ।
५ ख. मे । ६ ख. धे । ७ ख. खरस्य । नीवाके, इत्यन्ये ।
८ वालुके, इति मेदिनी । ९ क. अवि । १० ख. ना ।
११ अनुबन्धः प्रकृत्यादेर्दोषोत्पादे विनश्वरे, इति मा. । १२ ख. प्रवर्त ।

अधिकर्द्धिः समृद्धे स्यादमितर्द्धिश्च भण्यते ।
आशाबन्धः समाश्वासे भवेन्मर्कटवासके ॥
इक्षुगन्धा कोकिलाक्षे क्रोष्ट्र्यां [1]काशे च गोक्षुरे ।
इष्टगन्धः सुगन्धौ[2] स्यादपि क्लीबं तु वालुके ॥
उपलब्धि[3]र्मतौ प्राप्तौ ज्ञानानुभवयोरपि ।
[4]उग्रगन्धाऽजमोदायां वचायां [5]छिक्किकौषधौ ॥
कालस्कन्धः स्यात्तमाले तिन्दुके जीवकद्रुमे ।
तीक्ष्णगन्धा वचायां स्याच्छिग्रुराजिकयोरपि ॥
तृणगोधा चित्रकोले [6]कृकलासेऽपि गद्यते ।
परिव्याधो वेतसे स्यात्तथैव च द्रुमोत्पले ॥
ब्रह्मबन्धुरधिक्षिप्ते[7] निर्देशे च द्विजन्मनः ।
महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च ॥
विप्रबन्धुर्मुनिभिदि श्रुतबधुस्तथैव च[8] ।
समुन्नद्धः समुद्भूते पण्डितम्मन्यगर्विते ॥

॥ इति धचतुर्थम् ॥

---

॥ अथ धपञ्चमम् ॥

योजनगन्धा कस्तूर्यां सीतायां व्यासमातरि ।
सहस्रवेधि क्लीबं स्याद्रामठे नाऽऽम्लवेतसे ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये धान्तवर्गः ॥

---

१ को, इति मा. । २ ख. न्धे । ३ ख. ब्धौ ।
४ ख. पु. सार्धश्लोको नास्ति । ५ च्चि, इति मा. ।
६ ख. कु । ७ त्क्षेपे, इति मा. । ८ स्त्र निर्दिष्टः, इति मा. ।

॥ अथ नान्तवर्गः ॥

॥ अथ नैकम् ॥

न नो निषेधे गदितो ना नरेऽपि प्रकीर्तितः।

---

॥ अथ नद्वितीयम् ॥

अग्निर्वह्नौ चित्रके चाप्यनः शकटमातरि।
अन्नं भक्ते च भुक्ते स्यादिनः पत्यौ नृपार्कयोः॥
उन्नं क्लिन्ने[1] च सुरते तूनं[2] हीने, रणोद्यमे।
एनः पापे च दुःखे च क्लिन्नं तु स्याज्जलाप्लुते॥
क्षस्नं सर्वाम्बुकुक्षिषु त्वाहुर्गानं तु गायने।
ग्लानं म्लाने मतं गानं गीतौ चापि निरूपितम्॥
घनः सान्द्रे दृढे मेघे[3] विस्तारे लोहमुद्गरे।
घनं तु कांस्यतालादिवाद्यमध्यमनृत्ययोः॥
चिह्नं ध्वजे पताकायां चीनो देशान्तरे मतः।
तथा मृगान्तरे तन्तुव्रीहिभेदेंऽशुकान्तरे॥
छन्नं तु छादिते वाच्यलिङ्गं क्लीबे रहस्यपि।
छिन्ना गडूच्यां पुंश्चल्यां [4]छिन्नं क्षत्ते त्रिलिङ्गकम्॥
जनो लोकान्तरे लोके पामरे चाभिधीयते।
जनी सीमन्तिनीवध्वोरुत्पत्तावौ[5]षधीभिदि॥
[6]जह्नुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने।
जनुर्जन्मन्यपि जनिस्तदर्थैव निगद्यते॥

---

१ क. क्लीबे। २ ख. नो। ३ दीर्घे, इति मा.। ४ क. छ। ५ ब्राह्मी, इति मा.। ६ ख. नि।

[1]ज्यानिर्हानौ तटिन्यां च जिनोऽर्हति च जित्वरे ।
अतिवृद्धे च वृद्धे च ज्योत्स्ना चन्द्रातपे मता ॥
ज्योत्स्ना[2] पटोलिकायां च ज्योत्स्ना शुक्लविभावरी[3] ।
शुक्लपक्षनिशि ज्योत्स्नी ज्ञानं तत्त्वार्थनिश्चये ॥
ज्ञानी तु पुंसि दैवज्ञे ज्ञानयुक्तेऽन्यलिङ्गकः ।
तनुः कृशेऽल्पे विरले तनुः काये त्वचि स्त्रियाम् ॥
तानं प्रताने गीते च दानं गजमदे मतम् ।
तथा त्यागेऽप्यभिहितं पालनच्छेदशुद्धिषु ॥
दानुर्दातरि विक्रान्ते दीना मूषकयोषिति ।
दानुः स्त्रियां दनुरिव मता दानवमातरि ॥
दीनं च दुर्गते भीते दिनं त्वहनि न स्त्रियाम् ।
दूनं तु दुःखसम्पन्ने [4]दृग्घ्नं दृग्विहते मतम् ॥
द्युम्नं पराक्रमे वित्ते धनं वित्ते च गोधने ।
धनुः पुमान् [5]प्रियालद्रौ राशिभेदे शरासने ॥
ध्वनिः शब्दे तथा ध्वानः कथितः शब्दवेदिभिः ।
धाना तु स्याद्भृष्टयवे [6]धन्याकेऽभिनवोद्भिदि ॥
धान्यं तु बीजमात्रे स्याद्धुनी नद्यां नदे पुमान् ।
धेनुर्गवि प्रसूतायां नग्नः क्षपणबन्दिनोः ॥
विवाससि स्यूतवस्त्रे नग्नः कच्छविवर्जिते ।
नानाऽव्ययमनेकार्थे भूतं त्वभिनवे मतम् ॥

---

१ ख. जाति ।
२ ज्योत्स्नौ, इति कोशान्तरे ।
३ गयोरिति मा. ।
४ ख. दुघ्नं दृङ्नाशने मतम् ।
५ ख. पि ।
६ धान्याक इति परे ।

नुन्नः सम्प्रेरिते नूनं निश्चयार्थेऽव्ययं मतम्।
न्यूनं गर्ह्योनयोः पानं पीतिभाजनरक्षणे॥

पीनस्तु परिपुष्टे स्यात्फेनी [१]भक्ष्यान्तरे मता।
फेनः स्यादपि डिण्डीरे फेन्यऽपि स्यात्सरित्पतौ॥

ब्रध्नो[२] दीनमणावुक्तस्तेजस्विन्यपि कुत्रचित्[३]।
बुध्नो मूले निगदितो भग्नो भिन्ने पराजिते॥

भानुर्ना किरणे सूर्ये भिन्नः स्यात्त्रिषु दारिते।
सङ्गतेऽ[४]न्यच फुल्ले च भुग्नं तु स्यात्प्रमोटिते[५]॥

मग्नं निमग्ने मानस्तु ग्रहे[६] चित्तोन्नतावपि।
क्लीबं प्रमाणे प्रस्थादौ मीनो राश्यन्तरे झषे॥

मुनिः पुंसि वसिष्ठादौ वङ्गसेनतरौ जिने।
मृत्स्ना [७]मृत्स्नातुवर्योः स्त्री मेना हिमगिरेः स्त्रियाम्॥

मौनं वाङ्नियमे यत्नो व्यापारेऽप्यथ वाहने।
गमनेऽपि च[८] यानं स्याद्योनिः स्त्रीपुंसयोरपि॥

स्यादाकरे च जनने स्त्रीणां च स्मरमन्दिरे।
रत्नं स्वजातिश्रेष्ठे स्यान्मणावपि नपुंसकम्॥

बद्धमुष्टिकरे रत्निः [९]निष्कनिष्ठे त्वरत्निवत्।
रास्ना तु स्याद्भुजङ्गाख्यामेलापर्ण्यामपि स्त्रियाम्॥

---

१ ख. प। २ क. धो। ३ ख. पु. अयं पादः।
४ त्यन्त, इति मा.। ५ ख. दिते। ६ ख. ह्व।
७ क. मृत्सा। ८ क. प्यथ।
९ क. कनिष्ठे त्वरत्निवत्, ख. निकनिष्ठेऽथ रत्निवदिति मा.।

लग्नं सक्ते लज्जिते च तथा राश्युदयेऽपि च ।
लीनं विलयने गुप्तौ [1]लूनं छिन्नेऽपि वाच्यवत् ॥

वनं नीरे कानने च वह्निरग्नौ च चित्रके[2] ।
वन्या वनसमूहे स्याद्वनी चापि निगद्यते ॥

वस्नं[3] स्याद्वेतने मूल्ये वसनद्रव्ययोरपि ।
वानं शुष्कफले शुष्के कटे सीवनकर्मणि ॥

विन्नं ज्ञाते स्थिते[4] लब्धे शोनोऽजगरमूर्खयोः ।
श्येनः खगे पाण्डुरे च स्वप्नः स्वापे च दर्शने ॥

प्रसुप्तस्य च विज्ञाने सानुः प्रस्थे वनेऽपि च ।
स्थानं स्थितौ च सादृश्ये सन्निवेशावकाशयोः ॥

स्त्यानं[5] स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि ।
स्नानीयेऽभिषवे[6] स्नानं स्तनं प्रसवपुष्पयोः ॥

स्तना पुत्र्यां वधस्थानगलशुण्डिकयोरपि ।
स्तनुः पुत्रेऽनुजेऽर्के ना स्योनः[7] किरणसूर्ययोः ॥

हनुर्हट्टविलासिन्यां कपोलावयवे गदे ।
हनुः प्रहरणे मृत्यौ हीनं गर्ह्योनयोस्त्रिषु ॥

हानिः क्षये स्त्रियां हूनो देशे [8]जात्यन्तरे मतः ।

॥ इति नद्वितीयम् ॥

---

१ क. वू; ख. नू, इति मा. । २ त्र्यके । ३ क. स्त्नं । ४ क. तं । ५ ख. स्नानं । ६ ख. ये । ७ स्यून इत्यपि क्वचित् । ८ क. जात्य ।

॥ अथ नतृतीयम् ॥

अवनं रक्षणे प्रीतावपानो गुदमारुते ।
अञ्जनं कज्जले चाक्तौ[१] सौवीरे च रसाञ्जने ॥
अञ्जना वानरीभेदेऽप्यञ्जनो दिग्गजे मतः ।
अञ्जनी लेप्यनार्यां चाप्यथ स्यादयनं पथि ॥
भानोरुदग्दक्षिणाशागमने चापि गद्यते ।
असनो जीवकतरा असनं क्षेपणे मतम् ॥
अङ्गनं प्राङ्गणे[२] याने[३] कामिन्यामपि चाङ्गना ।
अङ्कनं[४] चिह्नकरणेऽप्यधुना साम्प्रतं मतम् ॥
अर्जुनः ककुभे पार्थे कार्त्तवीर्यमयूरयोः ।
मातुरेकसुते चापि धवले स्यात्तुवाच्यवत् ॥
नेत्ररोगे तृणे क्लीबं गवि स्यात्त्वर्जुनी स्त्रियाम् ।
कुट्टन्यां[५] बाहुदानद्यामुषायामपि योषिति ॥
महासहायामम्लानो निर्मलेऽपि च वाच्यवत् ।
[६]अर्शोघ्नी तालमूल्यां स्त्री त्वर्शोघ्नः [७]सूरणे पुमान् ॥
असिक्नी स्याद्वृद्धान्तःपुरप्रेष्यानदीभिदोः ।
अशनिस्तु पुमान् खड्गे चञ्चलायां च योषिति ॥
अरत्निर्ना सप्रकोष्ठतताङ्गुलिकरेऽपि च ।
कफोणावजिनं चर्ममात्रेऽपि च नपुंसकम् ॥

---

१ क. क्तौ ।　२ ख. ने ।　३ ख. मागे ।
४ ङ्कनं ।　५ कुट्टिन्यामित्यपि क्वचित् ।
६ अर्षौ इति मा. ।　७ तालव्यादिरन्यत्र ।

[१]अटनी धनुषः कोटावंशुमान्धुमणावपि[२]।
आसनं द्विरदस्कन्धे[३] पीठे यात्रानिवर्तने॥
आसनी विपणौ स्थित्यामासनो ना द्रुजीवके।
आपन्नः प्राप्तविपदि प्राप्ते चाप्यन्यलिङ्गकः॥
आदानं ग्रहणेऽपि स्यादलङ्कारेऽपि वाजिनः।
[४]आध्यानमुदरापूरे त्वालानं गजबन्धने॥
[५]आकारणे स्यादाह्वानं स्पर्द्धयाऽऽकारणेऽपि च।
[६]आयुष्मान्योगभेदे स्या[७]च्चिरजीविनि वाच्यवत्॥
उत्तानमगभीरे स्यादूर्ध्वास्यशयितेऽपि च।
उत्थानमुद्यमे[८] तन्त्रे पौरुषे पुस्तके रणे[९]॥
उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने।
उदानस्तूदरावर्ते वायुभेदे भुजङ्गमे॥
उड्डानमुन्नते चुल्ल्यामुच्छूनं स्यात्प्रफुल्लिते।
[१०]ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियाम्॥
कमनः कामुकेऽनङ्गेऽभिरूपेऽशोकपादपे।
कम्पनः पवने कम्पे कम्प्रे स्यादभिधेयवत्॥
कठिनं निष्ठुरे स्थाल्यां स्तब्धेऽपि त्रिषु वाच्यवत्।
कठिनी [११]खटिकायां स्यात्कठिना शर्कराभिदि॥

---

१ ख. पु. पा.। २ टौ पस्शुमान्पुमणावपि, इति मा., अयं नचतुर्थे न्याय्यः।
३ क. न्ध। ४ क. ध्मात। ५ आह्वानं प्राकारणे स्यादिति मा.।
६ ख. पु. पा। ७ त्पिट, इति मा.।
८ ते, इति मा.। ९ क. केष्वपि।
१० ख. अर्द। ११ कठिकायामिति मा.।

क्रन्दनं रोदनेऽपि स्यादाह्वानेऽपि नपुंसकम्।
कर्त्तनं न द्वयोश्छेदे नारीणां सूत्रनिर्मितौ॥
कदनं मर्दने[1] पापेऽप्यथ स्यात्कल्पना स्त्रियाम्।
करिणः सज्जतायां स्त्री क्लीबं क्लृप्तौ[2] च कल्पने॥
काञ्चनश्चम्पके नागकेसरे मातुलद्रुमे।
[3]काञ्चनारोदुम्बरयोर्हरिद्रायां च काञ्चनी॥
क्लीबेऽब्जकेसरे हेम्नि कामिनी भीरुवन्द्ययोः।
कानीनः कन्यकाजाततनये व्यासकर्णयोः॥
काननं विपिने [4]गेहे परमेष्ठिमुखेऽपि च।
काकिनी पणपादेऽपि[5] मानपादवराटके॥
कुन्नानं[6] स्यात्काचपात्रे तथा मृद्भाजनान्तरे।
कुहना दम्भचर्यायामीर्ष्यालौ कुहनो मतः॥
केतनं तु गृहे केतौ कृत्ये चापि निमन्त्रणे।
कौलीनं पक्षिणां युद्धे कौलीनं गुह्यजन्ययोः॥
कुकर्मणि कुलीनत्वे, कौपीनं चौरगुह्ययोः।
कौपीनं स्यादकार्येऽपि खलिनी खलमेलके॥
खलीनमश्वावरणे मुखगे लोहनिर्मिते।
ताडपत्र्यां च खलिनी खञ्जनः खञ्जरीटके॥
स्त्रियां स्यादपि सर्षप्यां[7] गतौ स्यादपि खञ्जनम्।
गर्जनं निनदे कोपे गहनं कलिले वने॥

---

१ कर्दमे, इति मा.। २ क. क्लमे। ३ लान्तोऽपि।
४ मो, इति मा.। ५ क. परोद।
६ ख. लं। ७ ख. र्पिण्या।

तथैव गह्वरे दुःखेऽप्यथोत्साहे प्रकाशने ।
सूचनेऽपि च हिंसायां गन्धनं समुदाहृतम् ॥
ग्रामीणो[1] ग्रामसम्भूते ग्रामीणः शुनि वायसे[2] ।
गृञ्जनं विषसम्पृक्तपशुमांसे रसोनके ॥
गोस्तनो हारभेदे स्यात्तथा धेनुपयोधरे ।
द्राक्षायां तु स्त्रियां क्लीबे गोपनं स्यादपह्नवे ॥
घट्टना चलनाऽऽवृत्योश्चन्दनं मलयोद्भवे ।
चन्दना [3]कालिभेदे स्याच्चन्दना[4] तु नदीभिदि ॥
चलनं भ्रमणे कम्पे कम्प्रे स्याद्वाच्यलिङ्गकम् ।
चलनी वस्त्रघर्घर्यां [5]वारिभेदेऽपि च क्वचित् ॥
चालनी तितउः प्रोक्ता चिह्नं चिह्ननिर्मितौ ।
चेतनो वाच्यवत्प्राणिजीवयोः[6] संविदि स्त्रियाम् ॥
छदनं छादने पक्षे पिधाने छेदनं छिदि ।
छर्दनं वमने क्लीबं निम्बालम्बुषयोः पुमान् ॥
जवनं तु स्यदे वेगे हये स्याद्वेगवत्यपि ।
जननी स्याद्दयामाचोर्जननं वंशजन्मनोः ॥
जयनं तु तुरङ्गादिसन्नाहे विजयेऽपि च ।
जघनं स्यात्स्त्रियाः श्रोणिपुरोभागे कटावपि ॥
जटिनी पिप्पलीमांस्योर्जटिनी योगिनीभिदि ।
जाङ्गलं वातबहुलप्रदेशे निर्जनेऽपि च ॥

१ नो, इति मा. । २ ख, सये । ३ कपि, इति मा. ।
४ चन्दनीति परे । ५ वारी, इत्यन्ये । ६ स्वर्गयोरिति मा. ।

जीवनं वर्तने नीरे जीवन्त्यां जीवनी[१] स्त्रियाम्।
जीवना स्यात्तु मेदायां तटिनी सिन्धुयोषिति॥
तपनो निरयेऽपि स्याद्भास्करेऽरुष्करेऽपि च।
तलुनः[२] पवने यूनि युवत्यां [३]तलुनी मता॥
पृष्ठवंशस्य यन्मांसं तल्पनं तत्प्रचक्षते।
तथैव गदितं सद्भिस्तद्दिनं प्रतिवासरे॥
तलिनं विरले स्तोके वाच्यवत्स्वच्छवस्तुनि।
तमोघ्नो बुद्धवह्न्यर्कव्योमकेशाच्युतेष्वपि॥
तेमनं त्वार्द्रीकरणे व्यञ्जनेऽपि निगद्यते।
तोदनं व्यथने[४] तोत्रे दंशनं दंशवर्मणोः॥
दर्शनं दर्पणे शास्त्रे [५]बुद्धिधर्मोपलब्धिषु।
दर्शनं नयने स्वप्ने दमन ऋषिभूपयोः[६]॥
तथा लतावीरयोश्च दहनश्चित्रकेऽनले।
भल्लातके च दुर्वृत्ते दशनः शिखरे रदे॥
द्दशानं ज्योतिषि क्लीबं द्दशानस्तु विरोचने।
दुर्दिनं तु घनच्छन्ने चिन्ताव्याप्ते तु दुर्दिनः॥
देवनं व्यवहारे स्यादक्षक्रीडाजिगीषयोः।
देवनोऽक्षेषु कुशले धमनो जातवेदसि॥
धमनस्तु भवेद्भस्त्रा[७]ध्मापकक्रूरयोस्त्रिषु।
धमनः स्याद्वातुलेऽपि भस्त्रायां धमनी[८] मता॥

---

१ ख. निः। २ क. लनः। ३ क, तु। ४ ख. नं।
५ बुद्धिवर्त्मा, इति मा.। ६ भूपशब्देन दमयन्तीभ्राताऽत्र विवक्षितः।
७ ख. ध्माय। ८ धमना, इति मा.।

धमनी तु शिराहट्टविलासिन्योश्च योषिति ।
धावनं क्षालने शीघ्रगमने धावनी पुनः ॥

पृश्निपर्ण्यां धावनस्तु रजके संप्रकीर्तितः ।
नन्दनं[१] वासवोद्याने नन्दनो हर्षके सुते ॥

नन्दिन्युमागङ्गयोश्च सौरभेय्यां च योषिति ।
नलिनी पद्मिनीव्योमगङ्गापद्माकरेष्वपि ॥

नपुंसकं [२]नीलिकायां न पुंसि सरसीरुहे ।
निदानं कारणे वत्सदामादिकारणक्षये ॥

निधनं तु कुले नाशे प्रधनं[३] दारुणे रणे ।
पवनं[४] कुम्भकारस्य पाकस्थाने निगद्यते ॥

निष्पावमरुतोः पुंसि प्रज्ञानं बुद्धिचिह्नयोः ।
प्रधानं तु महामात्रे प्रकृतौ परमात्मनि ॥

प्रज्ञायां[५] च तथैकत्वे प्रधानं स्यात्तथोत्तमे ।
पद्मिनी [६]बिसिनीवाप्योः पद्मसङ्घे च योषिति ॥

प्रसन्ना तु सुरायां स्यात्प्रसन्नं स्वच्छतुष्टयोः ।
प्रस्नो वाच्यवज्जाते[७] प्रस्नं फलपुष्पयोः ॥

पवनः स्याद्गन्धवहे पवन[८]स्तृणभिद्यजे ।
पाठीनः स्यान्मीनभेदे पाठके च द्रुमान्तरे ॥

---

१ सदनमिति मा. ।
२ ना, इति मा. ।
३ क. ख. धानमिति मा. ।
४ चनमिति मा. ।
५ ख. नं ।
६ बिस, इति मा. ।
७ वज्ञाते, इति मा. ।
८ क. स्तरु, ख. स्तु, इति मा. ।

पावनं तु जले कृच्छ्रे स्याद्यासे [1]पावकेऽपि च ।
पाचनं दशमूल्यादौ प्रायश्चित्ते च नाऽनले ॥
वाच्यवत्पाचयितरि हरीतक्यां च योषिति ।
पिशुन[2]स्सूच्यते क्रूरे काके ना सूचकेऽपि च ॥
कपिवक्त्रे कुङ्कुमे च क्लीबं स्पृक्कौषधौ स्त्रियाम् ।
पीतनं हरिताले च पीतदारुणि कुङ्कुमे ॥
पूतना तु हरीतक्यां ग्रहभिद्रोगभेदयोः ।
पृतना तु भवेत्सेनाविशेषे सैन्यमात्रके ॥
फलिन्यग्निशिखायां स्यात्फल्यां स्त्री फलिते त्रिषु ।
फाल्गुनस्तु गुडाकेशे मासे चार्जुनभूरुहे ॥
पूर्णिमायां फाल्गुनस्य फाल्गुनीत्यभिधीयते ।
बन्धनं तु वधे बन्धे बुधानो गुरुविज्ञयोः ॥
बोधनी बोधपिप्पल्यो[3]र्बोधनं गन्धदीपने ।
बोधिनी पूर्णमास्यां तु कार्त्तिक्यां परिकीर्तिता ॥
भवनं स्याद्गृहे भावे भण्डनं कवचे रणे ।
भट्टिनी द्विजभार्यायां नाट्योक्तौ राजयोषिति ॥
भर्जनं[4] स्यात्पाकभेदे भाजनं योग्यपात्रयोः ।
भावना [5]तु न ना ध्याने पर्यालोचेऽधिवासने ॥
भुवनं सलिले व्योम्नि भुवनं विष्टपे जने ।
विहाय पट्टमहिषीं भोगिनी राजयोषिति ॥

१ क. यात्र । २ सू, इति मा. । ३ पीप्यापो, इति मा. ।
४ क. जीनं । ५ तुल, इति मा. ।

मदनस्तरुभेदे स्याद्वसन्तस्मरसिक्थके[1] ।
मलनः [2]पटवासे स्यान्मलनं [3]मर्दने मतम् ॥
[4]मलिनी त्वृतुमत्यां स्यात्समलेऽपि तु वाच्यवत् ।
मण्डनं[5] भूषणे क्लीबमलङ्करिष्णुनि त्रिषु ॥
[6]मन्थनी मन्थनद्रव्ये मन्थनं लवलोडने ।
मार्जनो[7] लोध्रवृक्षे स्यादपि [8]मार्ष्टौ मतं त्रिषु ॥
मालिनी मातृकावृत्तभिदोर्मालिकयोषिति ।
गौरीचम्पानगर्योश्च नदीभेदे च ऋग्भिदि ॥
मानिनी स्यान्मानवत्यां फल्यामपि च योषिति ।
मिथुनं राशिभेदे स्यात्तथा स्त्रीपुंसयुग्मयोः ॥
मुण्डनं वपने त्राणे मेहनं मूत्रशिश्नयोः ।
मैथुनं स्यात्कामयुद्धे सङ्गतेऽपि नपुंसकम् ॥
यमनस्तु यमे चोपरतौ[9] बन्धे नपुंसकम् ।
यवनो [10]जातिभेदे स्याद्यभनं मैथुने स्मृतम् ॥
यजनं तु मतं यागे याजनो[11] यागकारिणि[12] ।
यापनं वर्त्तने [13]कालक्षेपे निरसनेऽपि च ॥
युञ्जानः सारथौ विप्रे चतुष्क्रोश्यां तु योजनम् ।
परमात्मनि योगे च रसनं स्वदने ध्वनौ ॥

---

१ छिल्लके, इति मा. । २ "पट, इति मा." । ३ कर्दमे, इति परे ।
४ मलिना, इति मा. । ५ ख. ञ्जनं । ६ ख. पु. पा. ।
७ ख. नी । ८ क. मार्ष्णौ, ख. मष्टै, इति मा. ।
९ ख. ते । १० देशभेदेऽपीत्यपरे ।
११ ख. ना । १२ क. णी । १३ ख. काले ।

जिह्वायामपि रास्नायां रसना रशना पुनः ।
मेखलायां तथा रज्जौ रञ्जनो रागरञ्जने ॥
कुचन्दने च मञ्जिष्ठानीलीरोचनिकासु च ।
स्त्रियां, तु रजनी लाक्षाहरिद्रानीलीरात्रिषु ॥
राधनं[1] साधने प्राप्तौ राधना भाषणे स्त्रियाम् ।
रेचनी त्रिवृतादन्त्यो रोचनी कर्कशे मता ॥
रोचना[2] रक्तकल्हारे गोपित्तवरयोषितोः[3] ।
रोचनः[4] कूटशाल्मल्यां पुंसि स्याद्रोचने त्रिषु ॥
रोदनं क्रन्दनेऽस्रेऽपि दुरालभौषधौ स्त्रियाम् ।
लङ्घनं तूपवासे स्यात्क्रमणे [5]प्लवनेऽपि च ॥
ललना कामिनीजिह्वायोषिद्भेदेऽपि योषिति ।
लाञ्छनं नाम्नि चिह्ने च कलङ्केऽपि निगद्यते ॥
लापनं बीजवापे स्याल्लालनं क्रीडने मतम् ।
लेखनं तु लिपिन्यासे भूर्जेऽपि छर्दनेऽर्दने ॥
[6]वसनं छादने वस्त्रे व्यञ्जनं तेमनेऽपि च ।
चिह्ने श्मश्रुण्यवयवे वमनं छर्दनेऽर्दने ॥
वर्द्धनं वृद्धिवर्द्धिष्णुच्छेदे घट्यां[7] तु वर्द्धिनी ।
वर्द्धिनी वारिधान्यां च सम्मार्जन्यां प्रकीर्तिता ॥
व्यसनं त्वशुभे सक्तौ विपत्तौ निष्फलोद्यमे ।
दैवानिष्टफले चापि वर्तनो वामने मतः ॥

---

१ क. ने । २ नं, इति मा. ।
३ गोपित्ते वारयोषितीत्यपि क्वचित् । ४ ख. नं ।
५ प्रवले, इति मा. । ६ ख. पु. श्लोकः । ७ वेध्यामिति मा. ।

न पुंसि तूलनालायां[1] वृत्तौ स्त्री [2]पेषणाध्वनोः ।
वर्त्तिष्णौ त्रिषु निर्दिष्टस्तर्कुपिण्डे च जीवने ॥
वचक्नुस्तु पुमान्विप्रे वावदूके[3]ऽभिधेयवत् ।
वामनस्तु हरौ खर्वे नीचे दिग्वारणेऽपि च ॥
तथैवाङ्कोट[4]वृक्षेऽपि वासनं धूपनेऽपि च ।
वारिधान्यां च वस्त्रे च प्रत्याशाज्ञानयोः स्त्रियाम् ॥
वितुन्नं[5] सुनिषण्णे च शैवालेऽपि नपुंसकम् ।
विज्ञानं कार्मणे ज्ञाने [6]प्रज्ञाने लाञ्छनेधिपि ? ॥
मानहीने वाच्यलिङ्गो विमानः पुंनपुंसकम् ।
व्योमयाने विमानं च [7]सार्वभौमगृहेऽपि च ॥
घोटके यानमात्रे च पुंनपुंसकयोर्मतः ।
वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम् ॥
क्लीबं वृत्तविशेषे स्यात्त्रिलिङ्गो मन्दतुच्छयोः ।
विक्लिन्नो जरया जीर्णे शीर्णे चार्द्रे च वाच्यवत् ॥
विपन्नं विपदाक्रान्ते त्रिषु पुंसि भुजङ्गमे ।
विच्छिन्नं तु समालब्धे विभक्तेऽप्यभिधीयते ॥
विलग्नं तु स्त्रिया मध्ये लग्नमात्रे भवेत्त्रिषु ।
विषघ्नस्तु शिरीषे स्याद्गुडूचीत्रिवृतोः स्त्रियाम् ॥
स्वातन्त्र्यकृत्ये व्युत्थानं विरोधाचरणेऽपि च ।
वृजिनं कलुषे केशे कल्मषे कुटिलेऽपि च ॥

१ क. यी । २ क प्रे । ३ ख. धुके ।
४ ख. कोंट । ५ ख. तन्नं ।
६ ख. पु. पादद्वयम् । ७ सत्पन्नौ, इति मा. ।

वेदना तु स्त्रियां ज्ञानदुःखयोर्वेष्टनं पुनः ।
उष्णीषे मुकुटे व्योम्नि वृतौ[1] च व्योमचारिणि ॥
वेष्टनी भक्ष्यभेदेऽपि भास्करस्यार्चनाश्रये ।
शकुनिः सौबले पुंसि विहगे करणान्तरे ॥
[2]शयनं तु मतं स्वापशय्ययोः सुरतेऽपि च ।
शमनः स्याद्यमे शान्तिवधयोस्तु नपुंसकम् ॥
श्वसनः श्वसिते पुंसि समीरे मदनद्रुमे ।
शकुनः पक्षिमात्रेऽपि विशेषे च शुभंवदे[3] ॥
शङ्खिनी स्यात्कृता?नारीविशेषे शङ्खिनी पुनः ।
शङ्खावत्यां शन्तनुस्तु भूपभेदे पुमान्मतः ॥
शतघ्नी हेतिभेदे स्याद्वृश्चिकाख्यां करञ्जके ।
शासनं राजदत्तोर्व्यां[4] लेखाज्ञाशास्त्रशास्तिषु ॥
श्लेष्मघ्नी मल्लिकायां[5] च ज्योतिष्मत्यां च योषिति ।
शोभनः स्याद्योगभेदे सुन्दरे वाच्यलिङ्गकः ॥
सवनं यजने स्नाने [6]सोमनिर्दलनेऽपि च ।
स्तननं ध्वनिमात्रे [7]स्यान्मेघशब्दे च कुन्थिते ॥
समानं सत्समैकेषु त्रिषु ना नाभिमारुते ।
सन्तानं[8] सन्ततौ गोत्रे स्यादपत्येऽमरद्रुमे ॥
स्पर्शनः स्यात्तु पवने दाने स्पर्शे नपुंसकम् ।
संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे ॥

१ त्तौ, इति मा. । २ क. शा । ३ ख. देत् ।
४ क. त्तोर्णा । ५ क. मलियायौ, ख. मूलयायामिति मा. ।
६ लोम, इति मा. । ७ स्यान्मेष, इति मा. । ८ अन्यत्र पुंस्यपि ।

स्यन्दनं तु स्रुतौ नीरे [1]स्यन्दनस्तिनिशे रथे ।
सज्जनं तु रथे क्लीबमुपरक्षणघट्टयोः ॥
सन्धानं स्यादभिषवे तथा सङ्घट्टनेऽपि च ।
सम्पन्नं स्यात्साधितेऽपि सम्पत्तिसहितेऽन्यवत् ॥
सतीनः कथितो वेणौ विद्वद्भिस्तृणकेतुवत् ।
[2]स्यन्दाग्निः स्थूलकाष्ठाग्नौ स्तम्भनः स्थैर्यकारिणि ॥
[3]सन्धिनी वृषभाक्रान्ताऽकालदुग्धोस्त्रयोरपि ।
सदनं मन्दिरे तोये संव्यानं [4]सदनेऽंशुके ॥
स्थापनं रोपणे पुंसवने पाठौषधौ स्त्रियाम् ।
साधनं[5] यज्ञकर्मान्ते यजमानप्रचेतसोः ॥
साधनं मृतसंस्कारे सैन्ये सिद्धौ[6] गतौ वधे ।
सूचनाऽभिनये दृष्टौ व्यधने गन्धनेऽपि च ॥
सेचनं रक्षणे सेके नौकायाः सेकभाजने ।
सेनानीः कार्तिकेये स्यात्तथा सेनापतावपि ॥
स्यात्सोपानं तु निःश्रेण्यां सुकुमारे?तु वाच्यवत् ।
सेवनं सीवनोपास्त्योर्हस्तिनी गजयोषिति ॥
जातिभेदे स्त्रियश्चापि हसनो (हा)स्यकारिणि ।
हसनं च भवेद्धासे[7]ऽङ्गारधान्यां तु योषिति ॥
हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः ।
ह्रदिनी ह्रादिनी नद्यां ह्रादिनी वज्रविद्युतोः ॥

---

१ क. स्य । २ ख. स्क । ३ क. स्पन्द, ख. स्यन्दि, इति मा. ।
४ छादने, इति मेदिनी । ५ पुसौत्यपरे, सावन इत्यपि क्वचित् ।
६ क. द्धे । ७ ह्रंसे, इति मा. ।

हिण्डनं हेलनं[१] चोभे क्रमाद्भ्रमणहेलयोः ।

॥ इति नतृतीयम् ॥

---

॥ अथ नचतुर्थम् ॥

ख्यातौ कुलध्वजे जन्मभूम्यामभिजनो मतः ।
सेनाविशेषे सामान्ये स्त्रियामुक्ता त्वनीकिनी ॥
अनूचानः साङ्गवेदविज्ञेऽपि विनयान्विते ।
अवागर्थे त्वपाचीनं[२] विपर्यस्ते तु वाच्यवत् ॥
अभिपन्नोऽपराद्धेऽभिग्रस्ते चापद्गते[३] त्रिषु ।
अन्वासनं [४]वस्तुभेदेऽप्युपास्त्यावनुशोचने ॥
अवलग्नोऽस्त्रियां मध्ये लग्नमात्रे त्रिलिङ्गकः ।
अतिवृत्ते कर्मणि स्यादवदानं च खण्डने ॥
[५]पराक्रमेऽपि गदितमनुमानं वितर्कणोः ? ।
अभिमानो भवेद्दर्पे ज्ञाने प्रणयहिंसयोः ॥
अधिष्ठानं पुरे [६]चक्रे प्रभावेऽध्यासनेऽपि च ।
आवर्जनं प्रदाने स्याच्चैत्ये त्वायतनं मतम् ॥
आवर्त्तनं परावृत्तौ लास्ये त्वा(व)र्त्तनं मतम् ।
आयोधनं वधे युद्धे त्वात्मयोनिर्विधौ स्मरे ॥
आवेशनं स्यादावेशे प्रवेशे शिल्पिमन्दिरे ।
आस्कन्दनं रणे संशोषणेऽपि स्यात्तिरस्कृतौ ॥

---

१ ख. डनं । २ अन्यत्र पुंस्यपि । ३ ख. द्गते ।
४ वस्ति, इति मा. । ५ ख. पु. पादद्वयम् । ६ व. इति मा. ।

आच्छादनमपावृत्तौ तिरोधाने तथांशुके ।
आराधनं सेवने स्यात्प्राप्तौ सन्तोषनिर्मिते ॥

आकाङ्क्षायामाकलनं विबन्धपरिसङ्ख्ययोः ।
आतञ्चनं प्रतीवापजवनाप्यायनेषु च ॥

[१]सम्भाषणे त्वालपनं लेपे चास्नपनं यथा ।
उपधानं[२] विशेषे च गण्डूषे[३] प्रणयेऽपि च ॥

उत्सादनं समुल्लेखोद्वासनोद्वर्तनेषु च ।
उद्वर्तनं चो(त्प)तनेऽप्यपावृत्तौ विलेपने ॥

स्यादुत्पतनमुत्पत्तौ तथोर्ध्वगमनेऽपि च ।
उदये स्यादुदयनं वत्सेशागस्त्ययोरपि[४] ॥

उद्वाहनं[५] द्विसीत्ये स्याद्रज्जामुद्वाहनी मता ।
उपासनं शराभ्यासेऽप्युपास्तावासनेऽपि च ॥

[६]कञ्चुक्यन्तःपुराध्यक्षे षिङ्गेऽहौ जोङ्गकद्रुमे ।
कपीतनो गर्दभाण्डशिरीषाम्रातकेषु च ॥

अश्वत्थेऽथ पुमान्पारावतकेकिपिकेष्वपि ।
कलध्वनिरथो [७]कात्यायनो वररुचावपि ॥

काषायवस्त्रे विधवाऽर्धजरत्युमयोः[८] स्त्रियाम् ।
कात्यायनी च दुर्गायां कुम्भयोनिस्त्वगस्त्यके ॥

१ ख. पु. इदं पादद्वयम् ।  २ ख. ना ।
३ गण्डौ, इति मेदिनी ।  ४ वत्सरागस्त्ययोरजे, इति मा. पा. ।
५ ख. सनं ।  ६ इदमग्रेऽश्वत्थेऽथ पुमानित्याद्यनन्तरमासीत् ।
७ कात्य, इति मा. ।  ८ त्वंसयोरिति मा. ।

वसिष्ठद्रोणयोश्चापि भवेत्क्लीबे कुचन्दनम् ।
रक्तचन्दनपत्राङ्गद्रुभेदेषु नपुंसकम् ॥
क्रौञ्चादनस्तु [1]पिप्पल्यां चिञ्चोटकमृणालयोः ।
खड्गधेनुः खड्गपुच्छ्यां फेने गण्डकयोषिति ॥
[2]गवादिनीन्द्रवारुण्यां गवां घासादनाश्रये ।
घनाघनो मत्तगजे तथा वर्षुकतोयदे ॥
शक्रे च घोषयित्नुस्तु विप्रकोकिलयोः समः[3] ।
वह्न्यर्कयोश्चित्रभानुर्जलौकायां जलाटनी ॥
जलाटनो[4] लोहपृष्ठखगे पाठीनसेऽपि च ।
तपोधनस्तापसे स्यान्मुण्डीर्यां तु तपोधना ॥
दशेन्धनस्तु दीपे स्याद्दिश्याहुः शब्दवेदिनः ।
देवसेनेन्द्रकन्यायां सेनायामपि तस्य वै ॥
नक्तं निर्गत्य यत्किञ्चि(च्छुभा)शुभकरं वचः ।
श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम् ॥
नागाञ्जना नागयष्टौ द्विरदस्यापि मुञ्जरे ।
भवेन्निधुवनं कम्पे पञ्चसायकसङ्गरे ॥
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ।
निशामनं[5] दर्शने स्यात्तथैवालोचनेऽपि च ॥
श्रुतौ दृष्टौ निशमनं तथा निरसनं वधे ।
प्रतिक्षेपे[6] च निष्ठीवे, जनौ[7] प्रजननं तथा ॥

---

१ किञ्चुल्यामिति मा. । २ गवादनीति परे । ३ क. मे ।
४ टलो, इति मा. । ५ ख. ननं ।
६ क. क्षये । ७ नो, इति मा. ।

योनौ चापि प्रहसनं रूपके हसने पुमान् ।
प्रणिधानं प्रयत्ने स्यात्समाधौ च प्रवेशने ॥
प्रयोजनं कार्यहेत्वोः सिंहे पञ्चाननः शिवे ।
अथ प्रवचनं वेदे प्रकृष्टवचनेऽपि च ॥
प्रतिपन्नोऽङ्गीकृते च विज्ञाते[1]ऽप्यन्यलिङ्गकः ।
प्रस्फोटनं विकसने सूर्ये स्यात्ताडनेऽपि च ॥
प्रतिमानं प्रतिच्छाया[2]गजदन्तान्तरालयोः ।
प्रसाधनी तु कङ्कत्यां सिद्धौ वेशे प्रसाधनम्[3] ॥
पयस्विनी नदीधेन्वोर्विभावर्यां च योषिति ।
प्रतिपन्नश्च [4]संस्कारलिप्सोपग्रहणेष्वपि ॥
अथ पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च ।
मृणालिन्यां पुटकिनी[5] प्रवदन्ति मनीषिणः ॥
पृथक्जनस्तु मूर्खे स्यात्तथा नीचजनेऽपि च ।
महाधनं महामूल्ये सुवाससि च सिल्हके ॥
महासेनो बाहुलेये महासैन्यपतावपि ।
मदयित्नुः पञ्चबाणे मद्ये तु स्यान्नपुंसकम् ॥
महामुनिरगस्त्ये ना कुस्तुम्बुरुणि न द्वयोः ।
मालुधानो मातुलाहौ मालुधानी लतान्तरे ॥
मातुलानी कलाये स्याद्भङ्गायां मातुलस्त्रियाम् ।
योजने मार्गधेनुः स्यादित्याहुः पण्डितोत्तमाः ॥

---

१ ख. ने । २ छायामिति मा. । ३ वेगे च सम्मता, इति मा. ।
४ ख. सत्कार । ५ ख. नौ ।

रसायनं विषेऽपि स्याज्जराव्याधिहरौषधे ।
पुल्लिङ्गः पक्षिराजे च विडङ्गाख्यौषधेऽपि च ॥
राजादनं क्षीरिकायां प्रियाले किंशुकेऽपि च ।
वर्धमानः प्रश्नभेदे [१]शरावैरण्डविष्णुषु ॥
विस्मापनो[२] ना कुहके गन्धर्वनगरे स्मरे ।
विसर्जनं परित्यागे दाने [३]सम्प्रेषणेऽपि च ॥
विरिञ्चनो[४] निगदितो ब्रह्मण्यपि विरिञ्चिवत् ।
विरोचनोऽग्न्यर्कचन्द्रप्रह्लादतनयेषु च ॥
विहेठनं तु हिंसायां[५] मर्दनेऽपि विडम्बने ।
ऋणमोक्षे विगणनं कथयन्ति विचक्षणाः ॥
भवेद्विहननं विघ्नहिंसयोस्तूलपिञ्जने[६] ।
विलुण्ठनी तु लोटन्यां लुण्ठने तु नपुंसकम् ॥
विश्वक्सेनो विष्णुगणे विष्णौ च स्यादथ स्त्रियाम् ।
विश्वक्सेना फलिन्यां स्यात्सुयोषायां विलेपिनी ॥
विलेपनी यवाग्वाञ्च विदारीकन्दकेऽपि च ।
वैरोचनिस्तु सुगते बलिदैत्यार्कपुत्रयोः ॥
शिखण्डिनी तु गुञ्जायां यूथिकायां च योषिति ।
अथ श्लेष्मघना मल्यां केतक्यां च निगद्यते ॥
सम्मूर्छनमभिव्याप्ता[७]वुत्साहमोहयोरपि ।
समुत्थानं निर्णये स्याद्व्याधीनां[८] च समुद्गमे[९] ॥

---

१ शरावे च, इति मा. । २ ख. यनो । ३ ख. सङ्क्रमे ।
४ रञ्चनो, इति मा. । ५ ख. नां । ६ स्थूलपिञ्जले, इति मा. ।
७ वृक्षाय, इत्यन्ये । ८ ध्यानामिति मा. । ९ ख. द्यमे ।

गन्धहस्तिनि हेरम्बे सदादानोऽभ्रहस्तिनि ।
अथ संवदनं[१] क्लीबमालोचे च वशीकृतौ[२] ॥
चतुःशाले सञ्जवनं प्रवदन्ति मनीषिणः ।
समादानं समीचीनग्रहणे सौगताह्निके ॥
संवाहनं त्वङ्गमर्दे[३] वाहनेऽपि नपुंसकम् ।
समापनं परिच्छेदे समाप्तिवधयोरपि ॥
सनातनः[४] पितृतिथ्यन्तरेऽजे शाश्वते हरे ।
स्तनयित्नुस्तु जीमूते स्तनितेऽपि निगद्यते ॥
सरोजिनी तु पद्मिन्यां तथैव कमलाकरे ।
बन्धे व्रते संयमनं यमपुर्यामपि स्त्रियाम् ॥
मेखलायां सारसन[५]मप्युरस्त्रे नपुंसकम् ।
सामिधेनी तु धाय्यायां समिध्यपि च योषिति ॥
सामयोनिस्तु सामोत्थे ब्रह्मकुञ्जरयोरपि ।
[६]सांयुगीनस्तु सङ्ग्रामे यः साधुः सोऽभिधीयते ॥
[७]सुदर्शनं हरेश्चक्रे [८]मेरुजम्बुद्रुमेऽपि च ।
तथैव शक्रनगर[९] आज्ञौषधिभिदोरपि ॥
सुयामुनो वत्सराजे प्रासादेऽभ्रान्तरे[१०]ऽच्युते ।
सौदामिनी स्त्रियां विद्युदप्सरोभेदयोरपि ॥
हर्षयित्नुः पुमान् पुत्रे काञ्चने तु नपुंसकम् ।

॥ इति नचतुर्थम् ॥

---

१ वेदनमिति मा. । २ ख. ते । ३ ख. दे । ४ ख. मापनः ।
५ ख. ना । ६ ख. पु. पा. । ७ अयं पुंस्यपि ।
८ मेरुवंशे, इति मा. । ९ प्रत्युगमने, इति मा. । १० देत्युत्तरे, इति मा. ।

॥ अथ नपञ्चमम् ॥

अथातिसर्जनं दानवधयोरपवर्जनम् ।
निर्वाणदानत्यागेषु क्लीबेऽथाप्यनुवासनम् ॥

स्नेहबस्तौ धूपने चाप्यथ स्याद्वर्णमाचके ।
विसर्जनीयेऽपि तथाऽभिनिष्ठानो निगद्यते ॥

स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि ।
अथोपसम्पन्नमपि निहतेऽपि सुसंस्कृते ॥

स्याद्गन्धमादनं भृङ्गे गन्धके वानरे पुमान् ।
सुरायां स्त्री नगे[1] काके चिरजीविनि पुंस्यपि ॥

दन्तधावनः खदिरे दन्तशुद्धौ नपुंसकम् ।
स्याद्धूमकेतनो वह्नौ तथा [2]केतुग्रहेऽपि च ॥

स्यान्नन्दिवर्धनो लिङ्गे[3] पक्षान्ते तनयेऽपि च ।
प्रतिपादनं दाने स्यात्प्रतिपत्तौ प्रबोधने ॥

स्यात्पद्मलाञ्छनो लोकेश्वरे ब्रह्मणि भास्करे ।
धनदे च स्त्रियां तारालक्ष्मीवाग्देवतासु च ॥

कालीयके हरिद्रायां पीतचन्दनमुच्यते ।
वरचन्दनमित्युक्तं कालीये देवदारुणि ॥

वरवर्णिनी तु साध्व्यां योषायां स्यात्फलिन्यां च ।
जतुन्यपि च (म)त्ता स्याद्धरिद्रायां च कामिनीरत्ने ॥

---

१ क. पे । २ केशे, इति मा. ।
३ लङ्के, इति मा. । भर्गे, इत्यपरे ।

व्रीहिकाञ्चनो मल्लूरे गदितः[1] शाब्दैकनिष्णातैः[2] ।
[3]मधुसूदनो द्विरेफे वनमालिनि चापि निर्दिष्टः ॥

महारजन[4]मुद्दिष्टं शातकुम्भकुसुम्भयोः ।
स्यान्मृत्युवञ्चनः शम्भौ मालूरद्रोणकाकयोः ॥
प्राहुः शाब्दैकनिष्णाताः सिन्दूरे रक्तशासनम् ।
वनमालिनी वाराह्यां गदिता शब्दवेदिभिः ॥

कटुकायां च पिप्पल्यां[5] शाके च शकुलादनी ।
शालङ्कायन उद्दिष्टो मुनिभेदे च नन्दिनि ॥

शिवकीर्त्तन इत्युक्तो भृङ्गरीटेऽसुरद्विषि[6] ।
श्वेतवाहनशब्दस्तु सुधाधाम्नि धनञ्जये ॥

स्यात्षष्टिहायनो व्रीहिविशेषे कुञ्जरेऽपि च ।
हरिचन्दनमित्युक्तं त्रिदशानां महीरुहे ॥

नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि ।
हरिवाहनस्तु पुंसि स्याद्विवस्वच्छचीशयोः[7] ॥

॥ इति नपञ्चमम् ॥

---

॥ अथ नषष्ठम् ॥

वराङ्गरूपोपेतो यः सिंहसंहननो हि सः ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये नान्तवर्गः ॥

---

१ ख. पु. प्राज्ञः । २ ख. ताः । ३ क. पु. श्लोकः ।
४ क. तं । ५ पटके, इति मा. ।
६ क. षे । ७ शम्बयोरिति मा. ।

॥ अथ पान्तवर्गः ॥

॥ अथ पैकम् ॥

पो वाया

---

॥ अथ पद्वितीयम् ॥

वल्पमप्युक्तं स्वल्पेऽप्यापस्तु भूम्नि च ।
कल्पो न्याये[१] विधौ शास्त्रे संवर्ते ब्रह्मणो दिने ॥
कपिस्तु सिल्हके विष्णावपि शाखामृगे पुमान् ।
कूपस्तु गुणवृक्षे स्यान्मृन्माने च विदारके ॥
कृपस्तु पाण्डवाचार्ये द्रोणपत्न्यां कृपी मता ।
कृपा दयायामथ च खष्पः क्रोधे बलात्कृतौ ॥
गोपो नृपे दिक्पतौ च गोष्ठाध्यक्षे च गोपके[२] ।
ग्रामाध्यक्षे भास्करेऽपि [३]सारिव्याख्यौषधे स्त्रियाम् ॥
[४]छुपः क्षुपस्पर्शनयोस्त्वपु सीसकरङ्गयोः ।
[५]तपश्चान्द्रायणादौ स्यात्साधुधर्मे च गद्यते ॥
योगे[६] चरेऽपि च तपस्तथा शिशिरमाघयोः ।
तल्पं स्याच्छयनीयेऽपि कलत्रेऽट्टेऽपि न द्वयोः ॥
त्रपा व्रीडाकुलटयोस्तापः सन्तापकृच्छ्रयोः ।
[७]तापी नद्यन्तरे दर्पः कस्तुर्यामप्यहङ्कृतौ ॥

---

१ स्त्रियामिति मा. । २ वले, इति मा. । ३ अन्यच्च तालव्यादिः ।
४ क. ख. "दुपाच्छयस्थनियो" इति मा. ।
५ ख. पु. श्लोकः । ६ पौको, इति मा. । ७ ख. वा ।

नीपः कदम्बबन्धूकनीलाशोकद्रुमेष्वपि ।
पुष्पं [1]विकासिकुसुमस्त्रीरजःस्वपि कीर्त्तितम् ॥

रूपं स्वभावसौन्दर्याऽऽलोकेषु पशुशब्दयोः[2] ।
ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ॥

रेपस्तु निन्दिते क्रूरे रोपो बाणे च रोपणे ।
लेपो[3] जग्धौ प्रलेपेऽपि वपा विवरमेदसोः ॥

बाष्प उष्मणि चास्रे ना[4]शष्पं बालतृणे स्मृतम् ।
पुंसि स्यात्प्रतिभाहानौ शापस्त्वाक्रोशदिव्ययोः ॥

शिल्पी तु वाच्यवत्कारौ स्त्रियां [5]कोलदलौषधौ ।
शिल्पं स्रुवे क्रियायोगे[6] स्वापः शयननिद्रयोः ॥

स्पर्शाज्ञतायामज्ञाने सूपो व्यञ्जनसूदयोः[7] ।
[8]सर्पः स्यात्सर्पणे व्याले नक्षत्रे नागकेसरे[9] ॥

भवेद्व्रेपस्तु लज्जायां क्षपा रात्रौ निगद्यते ।
क्षुपस्तु स्यात्क्षुद्रवृक्षे क्षेपो निर्हरणेऽपि च ॥

॥ इति पद्वितीयम् ॥

---

१ विकास, इत्यपरे ।  २ छन्दयोरिति मा. ।
३ क. लोपो ।  ४ श्माश्रुकशियौ, इति मा. ।
५ कोलार्द, इति मा. ।  ६ योग्ये, इति परे ।
७ ख. कारौ शिल्पी तु वाच्यवत् ।
८ ख. पु. पा. ।  ९ शापस्त्वाक्रोशदिव्ययोरिति, मा. ।

॥ अथ पान्तीयम् ॥

अनूपो महिषे देशभेदेऽपि स्यात्तु वाच्यवत् ।
आवापो भाण्डवपने परिक्षेपालवालयोः ॥
आतपस्तु प्रकाशे स्यादादित्येऽपि निगद्यते ।
आक्षेपो भर्त्सनाकृष्टिकाव्यालङ्कृतिषु स्मृतः ॥
आकल्पः कल्पने वेषे[1]ऽप्युडुपः प्लवचन्द्रयोः ।
उलपस्तृणभेदे स्याद्गुल्मिन्यामुलपोऽस्त्रियाम्[2] ॥
कच्छपी वल्लकीभेदे द्रुलौ[3] क्षुद्रगदान्तरे ।
निध्यन्तरे तथा कूर्मे[4] मल्लभेदे च कच्छपः ॥
कलापः संहतौ बर्हे तूणीरे भूषणे हरेः ।
कशिपुर्भक्ताच्छादनयोरेकोक्त्या च पृथक्तयोः पुंसि[5] ॥
कश्यपो मीनमृगयोर्भेदे भूमौ तु काश्यपी गदिता[6] ।
[7]कुतुपस्तु कुशे वाद्ये रवौ नेपालकम्बले ॥
कुतपो भागिनेये च भागे घस्रस्य चाष्टमे ।
[8]विट्शारिकायां कुणपी पूतीगन्धे शवे च ना ॥
कुलपः स्यात्कुलाधीशे कोणपो निर्ऋतीश्वरे ।
रक्षोमात्रे खबाष्पस्तु मिहिकायां निगद्यते ॥
खलपूः स्यात्बहुकरे गणपो गणनायके ।
जलपो वरुणे प्रोक्तः कथितो जनपो नृपे ॥

---

१ परे त्विमं तालव्यान्तं पेठुः । २ पामता, इति मा. ।
३ मूर्द्धन्यादिरिति विश्वः । ४ ख. मच्छे ।
५ क. पुंसि, इति पदं नास्ति । ६ ख. गदिता, इति पदं नास्ति ।
७ अकारमध्योऽप्यन्यत्र । ८ ख. विच्छा ।

जिह्वापः शुनि मार्जारे जीवपः प्राणनायके ।
त्वगङ्कुरे तु त्वक्पुष्पं प्रवदन्ति मनीषिणः ॥

तिरिपः[1] शालिभेदे स्याद्धनपो गुह्यकेश्वरे ।
धेनुपः स्यात्तु गोपाले प्रतापस्तापतेजसोः ॥

पादपः पादपीठेऽद्रौ पादुकायां तु पादपा ।
रक्तपा तु जलौकायां डाकिन्यां राक्षसे पुमान् ॥

वटपा वटयक्षिण्यां भवेज्झाटे तु बालपः ।
विटपः पल्लवे खिङ्गे विस्तारे [2]स्तम्बशाखयोः ॥

विकल्पः पुंसि निभ्रान्तौ[3] कल्पनेऽपि प्रकल्प्यते ।

॥ इति पत्ततीयम् ॥

---

॥ अथ पचतुर्थम् ॥

अभिरूपो बुधे रम्ये प्राप्तरूपेऽपि वाच्यवत् ।
अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च ॥

अपलापः स्मृतः प्रेम्णि तथैवापह्नवे मतः ।
उपतापस्त्वरायां स्यादुत्तापगदयोरपि ॥

उपकूपं निपाने स्याद्गण्डकूपोऽद्रिसन्निधौ ।
तथैव गदितो विज्ञैर्जलकूपोऽपगर्त्तके ॥

जलकूपी[4] पुष्करिण्यां नागपुष्पस्तु चम्पके ।
पुन्नागे च तथा नागकेसरे च निगद्यते ॥

---

१ अन्यच मान्तः ।
२ क. सुब; ख. सुख, इति मा. ।
३ क. भ्रातौ ।
४ जलकुपा, इति मा. ।

परिवापस्तु पर्याप्तौ[१] जलस्थाने परिच्छदे ।
परितापस्तु पुंसि स्याद्दुःखे च नरकान्तरे ॥
परिकम्पो भये कम्पे [२]प्रलापे प्रेम्णापह्नवे ? ।
[३]पिण्डपुष्पमशोके च [४]जवायां च कुशेशये ॥
[५]प्राप्तरूपो बुधे रम्ये बहुरूपो महेश्वरे ।
बहुरूपस्तथा विष्णौ [६]धूनके सरटे स्मरे ॥
मेघपुष्पं तु पिण्डाभ्राम्बुनादेये हरेर्हये ।
विप्रलापो विरोधोक्तावपार्थवचनेऽपि च ॥
[७]वीजपुष्पं दमनके तथा मरुबकेऽपि च ।
वृकधूपस्तु सरलद्रवकृत्रिमधूपयोः ॥
वृषाकपिस्त्वाश्रयाशे शम्भौ दामोदरेऽपि च ।
हेमपुष्पं [८]जवाशोकपुष्पयोश्च नपुंसकम् ॥

॥ इति पचतुर्थम् ॥

---

॥ अथ पपञ्चमम् ॥

भवेच्चामरपुष्पस्तु[९] चूतकोशाम्रकेतके ।
पूगे चापि भवेत्काशे तद्वदेव च बालके ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये पान्तवर्गः ॥

---

१ पर्युप्तौ, इति परे ।
२ ख. प्रलापेयेस्यापह्नवे ।
३ परि, इति मा. ।
४ जरा, इति मा. ।
५ क. प्रादा, ख. पाद्मः, इति मा. ।
६ धूणके, इति मा. ।
७ क. पु. पादद्वयम् ।
८ जपा, इति मा. ।
९ अन्यच्च क्लीबे ।

॥ अथ फान्तवर्गः ॥

॥ अथ फैकम् ॥

फो यज्ञसाधने स्थूले झञ्झावाते च पुंस्ययम् ।
प्रकटेऽथ[१] रणे फः स्यात्

---

॥ अथ फद्वितीयम् ॥

कफो दोषे तृतीयके ॥
गुम्फस्तु गुम्फने हस्तालङ्कारेऽपि निगद्यते ।
रेफो रवर्णे गदितः कुत्सिते वाच्यलिङ्गकः ॥
शफः पशूनां च खुरे तरुमूले शफं मतम् ।
शिफा जटायां सरिति मांसिकायां च मातरि ॥

॥ इति फद्वितीयम् ॥

---

॥ अथ फतृतीयम् ॥

द्विरेफः कथितो भृङ्गे शब्दभेदविशारदैः ।

॥ इति फतृतीयम् ॥

---

॥ अथ फचतुर्थम् ॥

घनोपले मेघकफं प्रवदन्ति मनीषिणः ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये फान्तवर्गः ॥

---

१ ख. प्र ।

॥ अथ बान्तवर्गः ॥

॥ अथ बद्वितीयम् ॥

अम्बु स्याद्वालके तोये कम्बुः शङ्खेऽस्त्रियां मतः ।
गजे च शम्बुकग्रीवाराजसु वलये पुमान् ॥
कम्बिर्दंशे च वंशस्य खजाकायामपि स्त्रियाम् ।
पण्डके तु भवेत्क्लीबं वाच्यलिङ्गस्त्वविक्रमे ॥
जम्बुः सुमेरुसरिति तरुद्वीपभिदोरपि ।
डिम्बो भयध्वनावण्डे[१] फुप्फुसप्लीहविप्लवे[२] ॥
बिम्बं तु प्रतिबिम्बे स्याद्बिम्बिकायाः फलेऽपि च ।
मण्डले कृकलासे च शम्बस्तु मुसलाग्रगे ॥
लोहमण्डलके वज्रे पुमांस्त्रिषु शुभान्विते ।
शिबिस्तु भूर्जपत्रे स्यात्तथोदारे महीपतौ ॥
शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ[३] ।
[४]स्तम्बो गुल्मे तृणादीनामप्रकाण्डे द्रुमेऽपि च ॥

॥ इति बद्वितीयम् ॥

---

॥ अथ बतृतीयम् ॥

अक्लीबं वशिरे शिग्रौ नाऽमत्ते पुनरन्यवत् ।
अलाबुश्चाप्यलाबूश्चाप्यालाबुस्तुम्बिकौषधौ ॥
अचुम्बस्त्वतिदीर्घे ? स्यादलम्बो नीचखर्वयोः ।
कदम्बो[५] निकुरम्बे[६]स्यान्नीपसर्षपयोरपि[७] ॥

---

१ ख. भण्डे । २ क. पुष्फुषलीह विप्लावे, ख. पुष्पषा लीह विस्तंठे, इति मा. ।
३ जलसम्भृते, इत्यन्ये । ४ ख. नास्ति पा. । ५ अन्यत्र क्लीबेऽपि ।
६ निकुरुम्ब इत्यपि केचित् । ७ क. पङ्कसर्षपयोरपि ।

कलम्बो[1] स्याच्छाकभेदे पुमान् स्याद्दण्डबाणयोः ।
कादम्बः सायके हंसे गोडुम्बः शीर्णवृन्तके ॥
स्त्रियामपि गवादिन्यां[2] नितम्बः स्कन्धरोधसोः ।
प्रलम्बा स्यात्तु शाखायां प्रलम्बो दैत्यदीर्घयोः ॥
चपुषे जलदे चापि हारभेदे लताङ्कुरे ।
भूजम्बूरपि गोधूमे विकङ्कतफलेऽपि च ॥
हिडिम्बो दैत्यभेदेऽपि हिडिम्बाऽपि तथा मता ।
हेरम्बो [3]विघ्नराजे स्यान्महिषे शौर्यगर्विते ॥

॥ इति बतृतीयम् ॥

---

॥ अथ बचतुर्थम् ॥

जलडिम्बस्तु कथितः शम्बूके शब्दवेदिभिः ।
[4]राजजम्बूर्जम्बुभिदि पिण्डखर्जूरकेऽपि च ॥

॥ इति बचतुर्थम् ॥

---

॥ अथ बपञ्चमम् ॥

धूलीकदम्बो [5]नीपे स्यात्तिनिशे[6] वरुणद्रुमे ।
शृगालजम्बूर्गोडुम्बे तथा [7]घोण्टाफले स्त्रियाम् ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये बान्तवर्गः ॥

---

१ म्बा, इति मा. । २ क. ख. दीनां, इति मा. ।
३ गज, इति मा. । ४ ख. पु. मा. नास्ति । ५ ख. निम्बे ।
६ क. ख. लिप्रो, इति मा. । ७ घोटा, इति मा. ।

॥ अथ भान्तवर्गः ॥

॥ अथ भैकम् ॥

भं नक्षत्रे गभस्तौ स्त्री पुंसि स्याद्भृगुनन्दने।
भूः स्थानमात्रे गदिता धरण्यामपि योषिति ॥

॥ इति भैकम् ॥

---

॥ अथ भद्वितीयम् ॥

अम्भो जले तु शोभायामाभा स्यात्करिणि त्विभः[1]।
[2]कुम्भो राश्यन्तरे योगविशेषे गदितो घटे ॥
[3]कामुके वारनार्यां च करिमूर्धनि राक्षसे।
गुग्गुलौ[4] वारनार्याश्च पतौ[5] कुम्भा त्रिवृत्यपि ॥
कुम्भी तु [6]पाटलावारिपर्णीपिठरकट्फले।
गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके ॥
जम्भो दैत्यान्तरे दन्ते जम्बीरेऽपि च भक्षणे।
जृम्भो हर्षे विकासे[7] च जृम्भायामपि गद्यते ॥
डिम्भस्तु बालके मूर्खे तथा बालिशचेष्टिते।
दम्भः स्यात्कैतवे कल्के[8] दृन्भूः स्त्री सर्पवज्रयोः ॥
नभस्तु श्रावणे पुंसि खे तु क्लीबे मतं नभः।
नाभिस्त्ववयवे मुख्यनृपे क्षत्रियमात्रके ॥

---

१ त्वितः, इति मा.।
२ इतः प्रभृति ख. पुस्तकाभावः।
३ कार्मुके, इति मा.।
४ क्लीबमिति शेषः।
५ पुंसीति शेषः।
६ पाटलीवार, इति मा.।
७ कसिते, इति मा.।
८ स्थे, इति मा.।

चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे ।
निभस्तु कथितो व्याजे पुल्लिङ्गः सदृशे त्रिषु ॥
प्रभुः परिवृढे[1] प्रोक्तः समर्थेऽपि निगद्यते ।
रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे[2] ॥
लाभः प्राप्तौ भवेल्लोभः कार्पण्यातिशयेऽपि च ।
विभुः प्रभौ सर्वगते शङ्करब्रह्मणोरपि ॥
शम्भुरर्हन्महादेवपरमेष्ठिषु कीर्त्तितः ।
शुभो योगविशेषेऽपि शुभं क्षेमे[3]ऽपि गद्यते ॥
शुम्भो दैत्यविशेषेऽपि शोभा कान्तीच्छयोर्मता ।
सभा सामाजिके द्यूते गोष्ठीमन्दिरयोरपि ॥
स्वभूर्ना ब्रह्मणि हरौ स्तम्भः स्थूणाजडत्वयोः ।
क्षोभः कोपविशेषे च कल्पान्तेऽपि निगद्यते ॥

॥ इति भद्वितीयम् ॥

---

॥ अथ भतृतीयम् ॥

अधिभूर्नायकेऽपि स्यादग्निभूस्तु मतो गुहे ।
आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोः ॥
आत्मभूर्ना विधौ कामे तनूजन्मनि चोच्यते ।
ऋषभो वृषभे [4]वृक्षविशेषे च स्वरान्तरे ॥

---

१ दृढे, इति मा. । २ वारणान्तरे, इति मा. ।
३ त्रे, इति मा. । ४ अष्टवर्गौषधान्तरे, इति विश्वः ।

श्रेष्ठार्थे च वराहस्य पुच्छे रन्ध्रे च कर्णयोः ।
ऋषभी शूकशिम्ब्यां स्यान्नराकारस्त्रियामपि ॥
ऋषभी च शिरालायां विधवायां क्वचिन्मता ।
ककुप् [1]शोभादिशोः शास्त्रे प्रवेण्यां चम्पकस्रजि ॥
ककुभो रागभेदे स्याद्वीणाया[2]मर्जुनद्रुमे ।
कटभी[3] तरुभेदे च ज्योतिष्मत्यामपि स्त्रियाम् ॥
करभः शरभे चाष्टापदे प्रोक्तो मृगान्तरे ।
करभो मणिबन्धादिकनिष्ठान्ते मतः करे ॥
कुसुम्भं हेम्नि च महारजने च कमण्डलौ ।
कैटभा कैटभीश्वर्यां कैटभो दैत्यभिद्यपि ॥
गर्दभो रासभे श्वेतकुमुदे गर्दभं मतम् ।
गर्दभी क्षुद्रजन्तौ स्याद्रुग्भेदे गन्धभिद्यपि[4] ॥
दुन्दुभिर्दितिजे भेर्यामक्षबिन्दुचिकद्वये ।
दुर्लभः कर्चूरे[5] चापि दुष्प्रापे वल्लभेऽपि च ॥
निकुम्भः कथितो दन्त्यां कुम्भकर्णसुतेऽपि च ।
वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे ॥
पुनर्नवायां वर्षाभूः प्लवे किञ्चुलकेऽपि च ।
विष्कम्भः स्याद्योगभेदे विस्तारप्रतिबन्धयोः[6] ॥
विष्कम्भः कथितो विज्ञैः कवाटस्यार्गलेऽपि च ।
रूपकाङ्गप्रभेदे च बन्धभेदे च योगिनाम् ॥

---

१ शोफा, इति मा. । २ वीणाङ्के, इति केचित् ।
३ टुभी, इति मा. । ४ पुंसीति शेषः ।
५ बुंरे, इति मा. । ६ वैदर्भे विस्मृतावपीति केचित् ।

विस्रम्भः[1] केलिकलहे विश्वासे प्रणये वधे ।
विष्टम्भः प्रतिबन्धे च रोगभेदेऽप्युदाहृतः ॥
वृषभस्तु वृषे श्रेष्ठे वैदर्भी रीतिभिद्यपि ।
नलपत्न्यां, च वैदर्भं[2] वाक्यवक्रत्व ईरितम् ॥
शरभो देवताभेदे[3] शरभः पक्षिभिद्यपि ।
करभे वानरभिदि सनाभिर्ज्ञातितुल्ययोः ॥
सुरभिश्चम्पके स्वर्णे सल्लकीमातृभेदयोः ।
गन्धोत्पले सौरभेय्यां जातीपुष्पवसन्तयोः[4] ॥
सुगन्धे च मनोज्ञे च वाच्यवत्सुरभि स्मृतम् ॥

॥ इति भतृतीयम् ॥

---

॥ अथ भचतुर्थम् ॥

अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि ।
शातकुम्भं तु हेम्नि स्यात्पुमान्स्यादश्वमारके ॥

॥ इति भचतुर्थम् ॥

---

॥ अथ भपञ्चमम् ॥

प्रोक्तः करिकुसुम्भस्तु नागकेसरचूर्णके ।
पिष्टसौरभमुद्दिष्टं विद्वद्भिर्मलयोद्भवे ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये भान्तवर्गः ॥

---

१ अन्यत्र तालव्यमध्यः । २ र्भौ, इति मा. ।
३ पशुभेदे, इत्यन्यत्र । ४ तंसयोरिति मा. ।

॥ अथ मान्तवर्गः ॥

॥ अथ मैकम् ॥

मो यमे समये चन्द्रे विधे मा तु श्रियां स्त्रियाम्।
मः शङ्करे च गदितो मा निषेधेऽव्ययं मतम्॥

॥ इति मैकम् ॥

---

॥ अथ मद्वितीयम् ॥

अमा दर्शे तिथावुक्ता स्यादात्मा यत्नचेतसोः।
स्वभावे च धृतौ पुंसि स्यादामो रुग्विशेषके॥

अपक्वे वाच्यलिङ्गं स्यादीर्मर्मीर्मौ व्रणे मतौ।
इध्मः स्यादपि यज्ञाङ्गं[1] स्यादिन्धनचयेऽपि च॥

तथैव गदिता सद्भिरुमा शङ्करयोषिति।
अतस्यामप्युमामाहुर्हरिद्राकीर्तिकान्तिषु॥

ऊर्मिस्तरङ्गे पीडायां वेगे भङ्गप्रकाशयोः।
उत्कण्ठावस्त्रसङ्कोचरेखयोरपि गद्यते॥

क्रमस्त्वनुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च।
कर्मास्त्री [2]कर्मक्रिययोः कर्मी स्यादपि तद्वति॥

- - - - - - - - - मूर्छायां तु क्लमो मतः।
कामः स्मरेऽभिलाषे च कामं रेतोनिकामयोः॥

---

१ होमेन्धनं स्यादिध्मोऽस्त्री, इति वैजयन्ती। २ व्याप्य, इति मा.।

अव्ययं त्वभ्यनुज्ञायां काम्येऽपि स्यान्नपुंसकम्।
कामिनी कामुके रत्यां स्त्री [1]किम् क्षेपवितर्कयोः॥

निन्दायां च परिप्रश्ने वाच्यलिङ्गत्वमीरितम्।
कामी तु कामुके चक्रवाके पारावतेऽपि च॥

क्रिमिर्ना क्रमिवत्कीटे लाक्षायां क्रिमिले खरे[2]।
किर्मी पलाशे शालायां[3] हेमपुत्र्यां च योषिति॥

खर्मं स्यात्पौरुषे [4]कोषजांशुकेऽपि च गद्यते।
गमो नाऽक्षविवर्ते स्यादपर्यालोचितेऽध्वनि॥

ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः।
ग्रीष्म उष्मागमे चोष्णे गुल्मः स्यात्सैन्यरक्षणे॥

गुल्मः सेनाघट्टभिदोर्गुल्मस्तम्बे[5] च रुग्भिदि।
गुल्मी स्यादामलक्येलावनिकावस्त्रवेश्मसु॥

घर्मः स्यादातपे ग्रीष्मेऽप्युष्म[6]स्वेदाम्भसोरपि।
चमूः सेनाविशेषे स्यात्सेनामात्रेऽपि योषिति॥

चर्मी मृगे विटे भूर्जे तथा फलकहस्तके।
चर्म कृत्तौ[7] च फलके छद्म [8]व्याजोपदेशयोः॥

जाल्मः क्रूरे पामरे चाप्यसमीक्ष्यप्रवर्तके।
जिम्हस्तु कुटिले मन्दे क्लीबं [9]तगरदर्पयोः॥

---

१ विक्षे, इति मा.। २ स्वरे, इति मा.।
३ शाखायां, इति मा. मालायामपि क्वचित्।
४ अचार्थे पुंस्यपि। ५ स्तवे, इति मा.।
६ कोष्ण, इति मा.। ७ तौ, इति मा.।
८ व्यालो, इति मा.। ९ नग, इति मा.।

तोक्मं कर्णमले पुंसि हरिते च हरिद्यवे[१] ।
दमः स्याद्दमथे दण्डे कर्दमे दमनेऽपि च ॥
दस्मस्तु यजमाने स्यादपि चोरे हुताशने ।
द्रुमस्तरौ किम्पुरुषे पारिजाते तथेश्वरे ॥
धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ ।
अहिंसोऽपनिषन्न्याये स्याद्धनुर्यमसोमपे ॥
[२]धाम देहे गृहे रश्मौ स्थानजन्मप्रभेदयोः ।
ध्यामं तु [३]श्यामले गन्धतृणे दमनकेऽपि च ॥
नमो नतौ भवेत्क्लीबेऽव्ययमप्यभिधीयते ।
नामाभिधाने निर्दिष्टं निश्चयार्थे तथाव्ययम् ॥
नेमिर्ना तिनिशे कूपचिकाचक्रान्तयोः स्त्रियाम् ।
नेमो गर्तेऽवधौ कीले [४]प्राकारे कैतवेऽपि च ॥
पक्ष्म [५]पक्षे च सूत्रांशे किञ्जल्के नेत्ररोमणि ।
पद्मोऽस्त्री पद्मके व्यूहे निधौ सङ्ख्यान्तरेऽम्बुजे ॥
नागे च स्त्री [६]फञ्जिकाश्रीचारटी[७]पन्नगीषु च ।
ब्रह्मा विधौ योगभेदतद्वतोः स्यान्नपुंसकम् ॥
ब्रह्म तत्त्वतपोवेदे पुमान् विप्रे च ऋत्विजि ।
ब्राह्मी तु भारतीसोमवल्लरीब्रह्मशक्तिषु ॥
तथैव फञ्जिकायां स्याच्छाकमत्स्यप्रभेदयोः ।
भ्रमस्तु कुन्दे भ्रमणे भ्रान्तौ स्याद्वारिनिर्गमे ॥

---

१ खरे, इति मा. । २ इदं पादद्वयं वद्वितीय आसीत् ।
३ श्या, इति मा. । ४ प्र, इति मा. । ५ सूत्रादि, इति मा. ।
६ पूजि, इति मा. । ७ वांटी, इति मा. ।

भामः क्रोधे रवौ दीप्तौ भामा स्यात्कृष्णयोषिति।
भीष्मः कौरवदायादे भीष्मं भीमं भयानके[1]॥

भीमोऽम्लवेतसे घोरे शङ्करे चार्जुनाग्रजे।
भूमिर्भुवि स्थानमात्रे भौमस्तु नरकाऽऽरयोः॥

भौमं भूमिभवेऽपि स्यात्त्रिषु भौमश्च वासरे।
यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च॥

शरीरसाधनापेक्षे नित्यकर्मणि चोच्यते।
यामः[2] स्यात्प्रहरे पुंसि संयमेऽपि तथाविधः॥

यामिः कुलस्त्रीस्वस्रोश्च युग्मो धनुषि संयुगे[3]।
रश्मिः पुमान्दीधितौ [4]स्यात्पक्ष्मप्रग्रहयोरपि॥

रमो रक्ताशोककान्तस्मरेषु स्याद्रमा श्रियाम्।
तथा योषाहिङ्गुनद्योः[5] क्लीबं वास्तुककुष्ठयोः॥

रामस्तु रैणुकेये स्याद्राघवेऽथ [6]हलायुधे।
हये पशुविशेषे च त्रिषु चारौ सितेऽसिते॥

रुक्मं तु काञ्चने लोहे रुमा स्याल्लवणाकरे।
रुमा सुग्रीवदारेषु रोम क्लीबं तनूरुहे॥

लक्ष्मीस्तु शोभासम्पत्योस्तथा [7]वृद्ध्यौषधावपि।
[8]फलिन्यां च वमिर्वान्तौ[9] स्त्रियां पुंसि च पावके॥

---

१ त्रिष्विति शेषः। २ मौ, इति मा.।
३ यमे, इति मा.। ४ स्यात्पच्च, इति मा.।
५ नार्योः, इति मा.। ६ हला, इति मा.।
७ वृट, इति मा.। ८ पलि, इति मा.।
९ नार्तो, इति मा.।

वर्ष्म देहप्रमाणातिसुन्दराकृतिषु स्मृतम् ।
वर्त्म नेत्रच्छदे मार्गे राजीवाणाश्वपक्षिषु ? ॥
वाग्मी पटौ सुराचार्ये वामी स्याद्रासभस्त्रियाम् ।
वडवायां शृगाल्यां च करभस्यापि योषिति ॥
वामं धने पुंसि हरस्मरवारिधरेष्वपि ।
नार्यां स्त्रियां वल्गुसव्यप्रतीपेषु मतं त्रिषु ॥
तन्तुवायोपकरणे वेमा वेमश्च वेम च ।
शमी शक्तुफलायां च [1]शिम्बिकायां च [2]वाग्गुलौ ॥
[3]श्यामः प्रयागस्थवटे वृद्धदारौ पयोधरे ।
पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु ॥
श्यामो दमनके गृध्रतृणे श्यामेऽभिधेयवत् ? ।
प्रियङ्गौ चाप्रसूतायां नार्यां त्रिवृति योषिति ॥
मरीचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ ।
यमुनायां च यामिन्यां नीलिकायामपीष्यते ॥
[4]श्रामस्तु पुंसि निर्दिष्टो [5]मासे मण्डपकालयोः ।
शुष्मं तेजसि सूर्ये ना समा संवत्सरे स्त्रियाम् ॥
[6]सर्वसाधुसमानेषु समं स्यादभिधेयवत् ।
सीमाऽऽघाटस्थितिक्षेत्रेष्वण्डकोशेऽपि च स्त्रियाम् ॥
सूक्ष्मं तेजोऽङ्कयोरुक्तं सूक्ष्मं क्षीरे नभस्यपि ।
सूक्ष्मं[7] स्यात्कतकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके ॥

१ शिव. इति मा. । २ गुग्गु, इति मा. । ३ श्या, इति मा. ।
४ स्रा, इति मा. । ५ मासमण्डक, इति मा. ।
६ सर्वधातु, इति मा. । ७ स्मं, इति मा. ।

सुमं प्रसूने[१] गदितं सूर्मौ[२] तु - - - - - - - - ।
सोमो लतायां चन्द्रे च वानरे च धनाधिपे ॥
वसुकर्पूरनीरेषु पितृदेवे समीरणे ।
हिमं स्यान्मलयोद्भूते तुषारेऽपि च शीतले[३] ॥
होमिर्घृते पावके च होमस्तु हवने मतः ।
क्षमा भूमौ तितिक्षायां स्त्रियां [४]युक्ते नपुंसके ॥
वाच्यवच्छक्तहितयोः क्षामं [५]दुःसमये मतम् ।
[६]क्षुमाऽतसीनीलिकयोः क्षेमं स्याल्लब्धरक्षणे ॥
चण्डायां ना शुभे न स्त्री कात्यायन्यां च योषिति ।
क्षौममट्टे[७] दुकूलेऽस्त्री क्षौमं वल्कलजांशुके ॥
शाणजेऽतसिजे चापि क्षौमं क्लीब उदीरितम् ॥

॥ इति मद्वितीयम् ॥

---

॥ अथ मतृतीयम् ॥

अधमः स्याद्गर्ह्यजने[८]ऽप्यवमोऽप्यधमे क्षये ।
अवमः स्यादसहनेऽप्यङ्गहीन उदीरितः ॥
अनुमा स्यादनुमितावप्रमा त्वयथार्थके ।
अभ्रमुर्गजयोषायामर्यमा पुंसि भास्करे ॥

---

१ सने, इति मा. ।
२ सूर्मौ स्थूणालोहप्रतिमयोरित्यमरः ।
३ एतदर्थे वाच्यलिङ्गः ।
४ मु, इति मा. ।
५ स्यात् क्षयक्षीणयोरिति परे ।
६ क्षमा, इति मा. ।
७ हे, इति मा. ।
८ गुह्यजने, इति मा. ।

अक्रमस्त्वक्रमे प्रोक्तोऽप्यागमः शास्त्र आयतौ ।
आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे ॥

आचामः स्यादाचमितावायामो दैर्घ्य उच्यते ।
आरामः स्यादुपवनेऽथ क्षामं मेदुरोऽन्यवत् ? ॥

उत्तमा दुग्धिकायां स्यादुत्कृष्टेऽपि च वाच्यवत् ।
उद्गमः स्यात्तथोत्पत्तावुत्तमः श्रेष्ठभागिनि ॥

उद्यमः स्यात्समुद्योगेऽ[1]प्युपमोपमितौ मता ।
उद्दामो बन्धरहिते स्वतन्त्रे च प्रचेतसि[2] ॥

कलमो लेखिनीचोरशालिलाक्षारसेषु च[3] ।
कलमः स्यात्तु सङ्ख्याने श्यामिकायां तु कालिमा ॥

कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः ।
कृत्रिमं रचिते प्रोक्तं सिल्हके लवणान्तरे ॥

गृहाश्मा गदितः शब्दवेदिभिर्गृहकच्छपे ।
गोलोमी श्वेतदूर्वायां षड्ग्रन्थावारयोषितोः ॥

गोधूमो नागरङ्गे स्यादोषधिव्रीहिभेदयोः ।
गौतमस्तु मुनौ शाक्ये रोचन्यम्बिकयोः स्त्रियाम् ॥

नदीभेदेऽपि, तलिमं विताने कुट्टिमेऽपि च ।
चन्द्रहासे च तल्पे च दाडिमः करकैलयोः ॥

निष्क्रमो बुद्धिसम्पत्तौ निर्गमे दुष्कुले तथा ।
निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे ॥

---

१ प्युषनो, इति मा. ।

२ एतदग्रे, उलमः स्यादजगरे, इति मा. एकपादः ।

३ करेषु चेति मा. ।

[१]कुलीरस्य प्रसूत्यां तु निगमा इति योषिति ।
नियमो मन्त्रणायां च प्रतिज्ञानिश्चये व्रते[२] ॥
नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च ।
परमं स्यादनुज्ञायामव्ययं परमं परे ॥
प्रथमस्तु प्रधाने स्यादादावपि च वाच्यवत् ।
पञ्चमो रागभेदे स्यात्पञ्चानां पूरणेऽपि च ॥
पञ्चमी स्वरभेदेऽपि पाण्डवानां च योषिति ।
प्रतिमा गजदन्तस्य बन्धे [३]चानुकृतावपि ॥
प्रक्रमः स्यान्नरश्रेष्ठे गोचेऽपि प्रक्रमः पुनः ।
क्रमा[४]वसरयोरुक्तो भूतात्मा चात्मदेहयोः ॥
मध्यमो मध्यगेऽपि स्यात्स्वरभेदे च कथ्यते ।
मध्यदेशेऽवलग्ने तु न स्त्रियामिति तद्विदः ॥
राकाहृष्टरजोनार्योः कर्णिकाऽङ्गुलिभेदयोः ।
त्र्यक्षरे छन्दसि तथा ललामं लाञ्छने ध्वजे ॥
ललामः स्यात्प्रभावेऽश्वे शृङ्गे भूषाप्रधानयोः ।
अपि स्याद्वालधौ पुण्ड्रे व्यायामः पौरुषे श्रमे ॥
विषमे[५] दुर्गसञ्चारे विभ्रमो भ्रान्तिहावयोः[६] ।
विद्रुमो [७]रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम् ॥

---

इदं "मध्यदेशेऽवलग्ने तु न स्त्रियामिति तद्विदः" इत्यनन्तरमासीत् ।
२ तते, इति मा. ।
३ ना, इति मा. ।
४ यसरणे, इति मा. ।
५ वयामो, इति मा. ।
६ हारयोरिति मा. ।
७ रक्ता, इति मा. ।

विलोमस्तु प्रतीपेऽपि वरुणे शुनि पन्नगे ।
[१]आमलक्यां विलोमी[२] च विलोमं [३]चारघट्टके ॥

विक्रमः क्रान्तिमात्रे स्यादपि स्याच्छक्तिसम्पदि ।
सङ्क्रमः क्रमणे सम्यग्वारिसञ्चारयन्त्रके[४] ॥

सम्भ्रमः[५] साध्वसे वेगे तथा स्यादादरे भये ।
सत्तमः[६] स्यात्पूज्यतमे साधीयस्युत्तमे त्रिषु ॥

सरमा कुक्कुरीदेवशुन्योः स्याद्राक्षसीभिदि ।
सुषमाऽत्यन्तशोभायां स्त्री चारौ च समे त्रिषु ॥

सुषीमः शिशिरे चारौ त्रिषु ना पन्नगान्तरे ।
सुकर्मा तु पुमान्योगभेदे स्याद्देवशिल्पिनि ॥

॥ इति मतृतीयम् ॥

---

॥ अथ मचतुर्थम् ॥

अभ्यागमो विरोधाजिघाताभ्युद्गमनान्तरे ।
अनूपमा सुप्रतीकयोषायां सुन्दरेऽन्यवत् ॥

उपक्रमस्तूपधायां ज्ञात्वाऽऽरम्भे च विक्रमे ।
चिकित्सायामुपगमः स्वीकारेऽन्तिकसर्पणे ॥

---

१ आस, इति मा. । २ लोममिति मा. ।
३ चारु, इति मा. । ४ रेयन्त्रके, इति मा. ।
५ म्यद्गः, इति मा. । ६ रामः, इति मा. ।

कारन्धमौ कांस्यकारे धातुवादरतेऽपि च ।
सितोत्पले[1] गन्धसोममित्याहुः शाब्दिका जनाः ॥
जलगुल्मो जलावर्ते कच्छपे जलचत्वरे[2] ।
दण्डयामस्तु कीनाशे दिवसे कुम्भसम्भवे ॥
प्लवङ्गमस्तु मण्डूके तथा शाखामृगेऽपि च ।
पराक्रमस्तु सामर्थ्योद्योगयोर्विक्रमेऽपि च ॥
महापद्मस्तु नागे स्यान्निधौ सङ्ख्यान्तरेऽपि च ।
यातयामं तु जीर्णे स्यात्तथा भुक्तोज्झिते[3]ऽपि च ॥
सार्वभौमस्तु दिङ्नागे[4]ऽखिलपृथ्वीपतावपि ।

॥ इति मचतुर्थम् ॥

---

॥ अथ मपञ्चमम् ॥

अवन्तिसोमं गदितं धान्याम्ले शब्दवेदिभिः ।
अभ्युपगमोऽवगमस्वीकारनिकटागमे ॥
इन्द्राग्निधूम इत्युक्तस्तुहिने तत्त्वविज्जनैः ।
नक्षत्रनेमिः शीतांशौ रेवत्यां च ध्रुवेऽपि च ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये मान्तवर्गः ॥

---

१ नोत्पले, इति मा. ।
२ एतदनन्तरं तरत्समस्तृणाग्नौ स्यादिति पादः । तरत्सलः, इति तु परे ।
३ सिते, इति मा. । ४ भागे, इति मा ।

॥ अथ यान्तवर्गः ॥

॥ अथ यैकम् ॥

यः सर्वनामानिलयोर्या श्रियां ज्या तु मातरि ।
मौर्व्यां धरण्यां निर्दिष्टा द्यु [1]स्याद्गगननाकयोः ॥
द्यौर्व्योम्नि स्वर्गे गदिता शब्दतत्त्वार्थवेदिभिः ॥

॥ इति यैकम् ॥

---

॥ अथ यद्वितीयम् ॥

अयः शुभावहविधावयो लोहे नपुंसकम् ।
अर्थ्यं[2] शिलाजतुन्यार्थ्ये[3] बुधे न्याय्ये[4] तु वाच्यवत् ॥
अर्थ्यः स्यादर्थसंयुक्तेऽप्यर्थनीयेऽपि वाच्यवत् ।
अन्त्योऽधमे पुल्कसे[5] च मुस्तायां च निगद्यते ॥
अर्घ्यमर्घस्य[6] योग्ये स्यादर्घार्थेऽपि च वाच्यवत् ।
अन्यः स्यादितरस्मिंस्तु वाच्यवन्ना तु वैरिणि[7] ॥
आयस्त्वलभ्ययोगे स्यादार्यस्तु स्वामिवैश्ययोः ।
आद्यस्तु प्रथमे मुख्ये स्यादाज्यं [8]तिलसर्पिषोः ॥
आस्यं मुखे[9] च तन्मध्ये स्यादाप्यं[10] जलजेऽम्मये ।
आख्याऽ[11]भिधाने योषायामाढ्यो धनवति त्रिषु ॥

---

१ स्यारङ्ग्यग्नि, इति मा. । २ र्घ्यमिति मा. ।
३ न्यर्घ्ये, इति मा. । ४ चाप्ये, इति मा. । ५ क्कसे, इति मा. ।
६ र्घ्यस्येति मा. । ७ णः, इति मा. । ८ जल, इति मा. ।
९ ख्ये, इति मा. । १० यमिति मा. । ११ पि, इति मा.

इज्या दानेऽध्वरेऽर्चायां सङ्गे[1]चेज्यो गुरौ मतः ।
इभ्या करेणुशल्लक्योः[2] स्त्रियामाढ्ये तु वाच्यवत् ॥
ईड्योऽवलोकनीये तु वाच्यलिङ्ग उदीरितः ।
विचार्यधार्ययोरूह्यं कव्यं [3]पित्र्ये तु वाच्यवत् ॥
कन्या कुमार्यां नार्यां च[4] तथा स्यादौषधान्तरे ।
क्रव्यं[5] तु पलले कण्ठ्यं योग्ये कण्ठपरिष्कृतौ ॥
कथ्यं[6] तु कथनीये स्यात्प्रभाते कल्यमुच्यते ।
कश्यं कशार्हे मद्ये च कल्यो वाक्श्रुतिवर्जिते ॥
सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च ।
उपायवचनेऽपि स्यात्त्रिषु मद्ये तु योषिति ॥
कक्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभबन्धने ।
[7]हर्म्यादीनां प्रकोष्ठे च कायस्तु स्यात्कदैवते ॥
कायं मनुष्यतीर्थेऽपि [8]मूर्तौ सङ्घस्वभावयोः ।
काव्यं ग्रन्थविशेषे स्यात्क्लीबे पुंसि तु भार्गवे ॥
- - - - - - - - - - - काव्या[9] पूतना बुधैः ।
कार्श्यं शरीरशोषेऽपि काम्यं [10]स्यात्कामनाभवे ॥
क्वाथ्यं क्वथनयोग्येऽपि कार्यं हेतौ प्रयोजने ।
कांस्यं वाद्यान्तरे पानपात्रे स्यात्तैजसान्तरे[11] ॥

---

१ गे, इति मा. । २ गन्धक्योरिति मा. । ३ पै, इति मा. ।
४ कन्यायामिति मा. । ५ व्यमिति मा. । ६ कयमिति मा. ।
७ हन्वा, इति मा. । ८ युतौ सिद्ध्य, इति मा. पुंसि, इत्यस्यादिः ।
९ म्यो, इति मा. । १० स्यात्कन्यका, इति मा. ।
११ द्वैजयन्तिके, इति मा. ।

कौत्यं तु भाषणार्हे स्यात्क्रिया तूपायचेष्टयोः ।
आरम्भे निष्कृतौ पूजासम्प्रधारणकर्मसु ॥
शिक्षाचिकित्साकरणे कुड्यं भित्तौ नपुंसकम् ।
विलेपने कौतुके च कुल्या जीवन्तिकौषधौ ॥
पयःप्रणाल्यां नद्यां च कुल्यः स्यात्कुलसम्भवे ।
मान्ये[1] कुलहिते चापि त्रिषु स्याद्वाच्यलिङ्गतः ॥
कुल्यं स्यात्कीकसेऽप्यष्टद्रोणी[2]शूर्पामिषेषु च ।
कृत्या क्रियादेवतयोस्त्रिषु विद्विष्टकार्ययोः ॥
क्लेश्यं तु क्लेशनीये स्यात् क्लेद्यं क्लेदसहे मतम् ।
कैश्यं तु केशसम्बद्धे कौप्यं कूपभवे त्रिषु ॥
खाद्यं भक्ष्यविशेषे स्यात्खेद्यं [3]खेदयुते त्रिषु ।
गयः स्यात्पशुराजर्ष्योस्तीर्थभेदे गया मता ॥
गव्यं तु गोहिते ज्यायां रागद्रव्येऽप्यथ स्त्रियाम् ।
गोसमूहे च दुग्धादौ न्टलिङ्गो गलितायुधे ? ॥
गण्यं[4] तु गणनीये स्याद्गम्यं[5] गमनयोग्यके ।
[6]गर्ह्यं तु निन्दिते गद्यमनिबद्धे वचस्यपि ॥
गार्ग्यः स्यान्मुनिभेदेऽपि गार्ह्यं गृहसमन्विते ।
ग्राम्यं स्त्रीकरणेऽश्लीले ग्राव्यं[7] पाषाणनिर्मिते ॥
गुह्यं रहस्युपस्थेऽच गुह्यः कमठदम्भयोः ।
[8]गृह्यं गुदे ग्रन्थभेदे क्लीबं शाखापुरे स्त्रियाम् ॥

---

१ मनो, इति मा. । २ सूर्पामिषेषु इति मा. ।
३ विद, इति मा. । ४ व्यमिति मा. । ५ काम्यमिति मा. ।
६ गु, इति मा. । ७ म्यमिति मा. । ८ गुह्यमिति मा. ।

गृहासक्तमृगादौ ना त्रिषु चास्वैरिपक्षयोः ।
गृह्यं च गृहकृत्यादौ सूत्रभेदे च कीर्तितम् ॥

गेयं तु गीते गेयः [1]स्याज्ज्ञातव्ये गायने त्रिषु ।
गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत् ॥

घर्म्यं[2] घर्मसमुद्भूते वाच्यलिङ्गमुदीरितम् ।
चव्यं तु चविके क्लीबं वचायां[3] स्यात्तु योषिति ॥

चयः समूहे प्राकारे मूलबन्धे समाहृतौ[4] ।
चित्यं मृतकचैत्ये स्याच्चित्या मृतचितौ स्त्रियाम् ॥

चिन्त्यं विचारणीये[5] स्याच्चेयं चेतुं तथार्हति ।
चैत्यमायतने बुद्धबिम्बे[6] नोद्देशपादपे ॥

चोद्यं स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत् ।
छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः ॥

पालनोत्कोचयोर्दीप्तिसच्छोभापङ्क्तिषु स्त्रियाम् ।
छाद्यमाच्छादनार्हे स्याच्छेद्यं छेदार्ह ईरितम् ॥

जया जयन्तीतिथिभि[7]त्पथ्योमातत्सखीष्वपि ।
जयन्ते नाऽग्निमन्थे च विजये च युधिष्ठिरे ॥

जन्यं हट्टे परीवादे सङ्ग्रामे च नपुंसकम् ।
जन्या मातृवयस्यायां जन्यः स्याज्जनकेऽपि च ॥

---

१ स्याद्गी, इति मा. ।
२ र्ममिति मा. ।
३ चन्मया, इति मा. ।
४ हितौ, इति मा. ।
५ यामिति मा. ।
६ बिचे, इति मा. ।
७ त्पद्ये, इति मा. ।

त्रिषूत्पाद्यजनित्रोश्च[1] नवोढाज्ञातिभृत्ययोः ।
वरस्निग्धे च जन्युः स्यात्पुंसि प्राण्यग्निधातृषु[2] ॥
तक्ष्यं तु तक्षणीये स्यात्तर्प्यं तर्पणयोग्यके ।
तथ्यं यथार्थवचसि तर्क्यमूह्येऽपि च त्रिषु ॥
त्रयी त्रिवेद्यां त्रितये तार्क्ष्यं क्लीबे रसाञ्जने ।
तार्क्ष्यः[3] स्यादश्वकर्णाख्यवृक्षे रथतुरङ्गयोः ॥
तार्क्ष्यः स्यात्पुंसि गरुडे तथैव गरुडाग्रजे ।
तार्यं नौकादिसाध्ये स्यात्ताड्यं तु ताडसंस्कृते ॥
तिष्यस्तु ऋक्षभेदे स्यात्कलौ धात्र्यां तु योषिति ।
तीर्थ्यः स्यादपि तीर्थार्हे[4] तिथ्यं तिथिसमुद्भवे ॥
द्रव्यं वित्ते[5] पृथिव्यादौ पित्तले च विलेपने ।
क्लीबेऽथ भेषजे भव्ये [6]द्रुविकारे च वाच्यवत् ॥
दस्युश्चोरेऽप्यरातौ स्याद्दायः स्यात्क्रूरभाषणे[7] ।
विभक्तव्यपितृद्रव्ये तथा हरणदानयोः ॥
दर्वीसंस्थे तु दार्व्यं स्याद्दाप्यं स्याद्दापनीयके ।
दमनीये तु [8]दाम्यं स्यान्नाम्यं स्यान्नमनीयके ॥
दिव्यं सत्यपरीक्षायां कथितं शब्दवेदिभिः ।
दिव्यं लवङ्गे धात्र्यां[9] च वल्गौ[10] दिवि भवे त्रिषु ॥

---

१ त्रिषूत्याजघनित्रोश्चेति मा. । २ क्रुधातुषु, इति मा. ।
३ र्च्या, इति मा. । ४ तीर्थ्या. इति मा. । ५ चित्ते, इति मा. ।
६ दृग्वि, इति मा. । ७ त्त्राषणे, इति मा. ।
८ दाम्यमिति । घञन्तात्तत्करोतीतिण्यन्ताद्यदिति भावः, एवमग्रेऽपि ।
९ न्यामिति मा. । १० न्दौ, इति मा. ।

दूष्यं तु दूषणीये स्यात्क्लीबं वस्त्रे च तद्गृहे ।
दूत्यं दूतस्य भावे स्यात्तथा तत्कर्मणि स्मृतम् ॥
दैत्योऽसुरे सुरायां च दैत्या चण्डौषधावपि ।
धन्या [1]धात्र्यामलक्योः स्याद्धन्यः पुण्यवति त्रिषु ॥
धान्यं व्रीहिषु धान्याके धाय्या[2] स्याद् ऋग्विशेषके ।
धिष्ण्यं स्थानाग्निगेहेषु कथयन्ति मनीषिणः ॥
स्थिरा चित्तोन्नतिर्या तु तद्धैर्यमिति गद्यते ।
नयो नीतौ तथा नाव्यं नौतार्ये कथितं बुधैः ॥
नित्यं तु सततेऽपि स्याच्छाश्वतेऽपि च वाच्यवत् ।
पथ्या तु स्याद्धरीतक्यां पथ्यं तु स्याद्धिते त्रिषु ॥
पद्यं[3] श्लोके पुमाञ्शूद्रे पद्या स्याद्वर्त्मनि स्त्रियाम् ।
पाक्यं लवणभेदे स्याद्यवक्षारे पुनः पुमान् ॥
प्रायो (मरणान?)शने मृत्यौ बाहुल्यतुल्ययोः ।
प्रियो हृद्ये वाच्यलिङ्गः स्यादृद्ध्यां चौषधे धवे[4] ॥
पीयु[5]र्घूके रवौ काले पुण्यं स्याच्छोभने त्रिषु ।
क्लीबं धर्मे च सुकृते पुष्य ऋक्षे कलौ युगे ॥
(मासभेदेऽपि पुष्यः स्या?)त्पूज्यश्च सुरवन्द्ययोः ।
पेयं पातव्यपयसोः पेया श्राणाच्छमण्डयोः ॥
बल्यं प्रधानधातौ स्यात्तथा बलकरे त्रिषु ।
भयं कुब्जप्रसूने स्याद्घोरे प्रतिभयेऽपि च ॥

---

१ धान्या, इति मा. । २ न्या, इति मा. । ३ थ्यमिति मा ।
४ वधे, इति मा. । ५ पीषु, इति मा. ।

भव्यं भाविनि योग्ये च शुभे सत्ये च गद्यते ।
कर्मरङ्गतरौ पुंसि स्त्रियां करिकणोमयोः[1] ॥
क्लीबमस्थिनि[2] भाग्यं तु[3] स्याच्छुभाशुभकर्मणोः ।
भृत्यः पोष्ये भृतौ भृत्या[4] मयुर्ना किन्नरे मृगे ॥
मन्या [5]शिरायां ग्रीवाया मन्तुं योग्येऽन्यलिङ्गकम् ।
मयः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च ॥
मत्स्यो मीनेऽथ पुम्भूम्नि देशे, मध्यान्तरेऽधमे ।
मध्यं न्याय्ये विलग्नेऽपि मन्युः क्रोधे मखेऽपि च ॥
दैन्ये शोके च माल्यं तु कुसुमेऽपि च तत्स्रजि ।
माया तु शाम्बरीबुद्धोर्मायः पीताम्बरेऽसुरे ॥
मुख्यं प्रधाने गदितं वाच्यवच्छब्दवेदिभिः ।
मृग्यं मृगस्येदमर्थे[6] गवेष्येऽपि मतं त्रिषु ॥
मूल्यं तु वेतने वस्ने[7] मृत्युर्ना मरणे यमे[8] ।
मेध्यं शुचौ त्रिषु तथा वचारोचनयोः स्त्रियाम् ॥
मोच्यं[9] तु मोचनीये स्याद्यभ्यं तु यभनार्थके ।
ययुः पुमानश्वमात्रे[10] तथा यज्ञार्थवाजिनि ॥
याप्यं तु यापनीये स्यान्निन्द्ये याम्यं तु नारके ।
याम्याऽवाच्यां भरण्यां च पुंस्यगस्त्ये च चन्दने ॥

---

१ योमयोरिति मा. । २ स्तुनि, इति मा. । ३ ना, इति मा. ।
४ त्यो, इति मा. । ५ स्त्रियां स्यादिति मा. । ६ चिन्त्यमेतत् ।
७ स्नो, इति मा. । ८ णोमयमिति मा. ।
९ ण्यन्ताद्यदिति भावः । १० चे, इति मा. ।

योग्यः प्रवीणयोगार्होपायि[1]शक्तेषु वाच्यवत् ।
क्लीबमृध्यौषधौ पुष्ये ना स्त्र्यभ्यासार्कयोषितोः ॥

रम्या रात्रौ चम्पके ना मनोज्ञे वाच्यलिङ्गवत् ।
रथ्या रथौघविशिखावर्तनीचत्वरेषु च ॥

रथवोढरि रथ्यः स्याद्रूप्यः स्यात्सुन्दरे त्रिषु ।
रूप्यं स्यादाहतस्वर्णरजते रजतेऽपि च ॥

रयो वेगे निगदितो राज्यं राजाधिपात्मके ।
लयो नाशे च संश्लेषे साम्ये तौर्यत्रिकस्य च ॥

लक्ष्यं तु लक्षणीये स्यादपदेशशरव्ययोः ।
लास्यं तौर्यत्रिके नृत्ये लभ्यं लब्धव्ययुक्तयोः ॥

वन्ध्यस्त्वफलवृक्षादावप्रजायां च योषिति ।
वर्या पतिंवरायां च वरेण्ये त्रिषु ना स्मरे ॥

व्रज्या पर्यटनेऽपि स्यात्प्रव्रज्यायामपि स्त्रियाम् ।
वन्यं त्रिषु वनोद्भूते स्त्री वनाम्बुसमूहयोः ॥

वाच्यं तु कुत्सिते हीने वचनार्हे तु वाच्यवत् ।
विन्ध्यः स्यात्पर्वते विन्ध्या लवल्यामपि योषिति ॥

वीक्ष्यं तु विस्मये दृश्ये पुंसि लासकवाजिनोः ।
वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि ॥

वेश्या तु गणिकायां स्याद्वेश्यं वेश्यागृहे मतम् ।
शल्यं शङ्कौ शरे वंशकर्णिकायां[2] च तोमरे ॥

१ हर्यापि, इति मा. । २ चञ्चिकायामिति मा. ।

शल्यश्च श्वाविधि प्रोक्तो मदनद्रुमभूपयोः[१] ।
शय्या स्याच्छयनीयेऽपि गुम्फनीये च गुम्फने ॥

शल्यं तु न स्त्रियां शङ्कौ[२] शयः शय्याऽहिपाणिषु ।
शून्यं तु निभृतेनल्यामन्योभिन्नसमानयोः ! ॥

शौर्यमारभटीशक्त्योः सह्यः शैलान्तरेऽपि च ।
सोढव्ये त्रिषु च क्लीबमारोग्ये समुदीरितम् ॥

सङ्ख्यं समिति सङ्ख्या तु सङ्ख्यानेऽपि निगद्यते ।
सख्यं तु मैत्र्यां क्लीवे स्यात्सत्यं तु शपथे[३] कृते ॥

सन्ध्या पितृप्रसूनद्यन्तरयोर्युगसन्धिषु ।
सव्यं वामे प्रतीपे च सायः काण्डदिनान्तयोः ॥

स्मयो गर्वे मतं स्तन्यं क्षीरे तु स्तनसम्भवे ।
साध्यो योगान्तरे देवे साधनीये तु वाच्यवत् ॥

सूर्योऽर्कपर्णे तपने सूर्या [४]भार्यौषधीभिदोः ।
राकामध्यगते चन्द्रे सूर्य इत्यभिधीयते ॥

स्थेयो [५]विवादपादस्य निर्णेतरि पुरोहिते ।
सेव्यं क्लीबमुशीरे[६] स्यात्सेवार्हे वाच्यलिङ्गवत् ॥

सैन्यं क्लीबे बले सेनासमवाये तु वाच्यवत् ।
सौम्यो ज्ञे ना त्रिषनुग्रे[७] मनोज्ञे सोमदैवते ॥

---

१ शल्यश्च कथितः श्वाविन्मदनद्रुमभूपयोरिति मा. ।
२ क्ताविति मा. ।
३ ये, इति मा. ।
४ अस्य तदित्यादिः ।
५ विवाह, इति मा. ।
६ दन्त्यमध्य, इति मा. ।
७ सूक्ष्मे, इति मा. ।

हार्यो बिभीतकतरौ हर्तव्ये पुनरन्यवत्।
हृद्यं मनोज्ञे जवने[1] हृद्भवेऽपि च वाच्यवत्॥
वशकृद्वेदमन्त्रे च हृद्या वृद्ध्याख्यभेषजे।
क्षयो रोगान्तरे वेश्मकल्पान्तापचयेष्वपि॥

॥ इति यद्वितीयम्॥

---

॥ अथ यतृतीयम्॥

अव्ययो निर्व्यये [2]विष्णावव्ययं शब्दभिद्यपि।
अभयं स्यादुशीरे तु हरीतक्यभया मता॥
अभया स्यात्तथा गौर्यां निर्भये त्वन्यलिङ्गकः।
स्यादगस्त्यः कुम्भयोनौ वङ्गसेनतरावपि॥
अभिख्या [3]त्वभिधाने स्याच्छोभायां च यशस्यपि।
अवध्यमवधार्हे स्यादनर्थकवचस्यपि॥
अहल्या त्वप्सरोभेदे गौतमस्य च योषिति।
अनयो व्यसने दैवाशुभयोश्च [4]विपद्यपि॥
अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः[5]।
अश्वीयमश्वसङ्घाते मतमश्वहितेऽन्यवत्॥
[6]अहार्यः पर्वते [7]हर्तुमयोग्येऽपि च वाच्यवत्।
अधृष्यस्तु प्रगल्भे स्यादधृष्या तटिनीभिदि॥

---

१ रणे, इति मा.। २ धिष्टेष्ठ, इति मा.। ३ त्वपि, इति मा.।
४ नि, इति मा.। ५ त्रयोरिति मा.।
६ आ, इति मा.। ७ ध, इति मा.।

अपत्यं सन्ततौ क्लीबममात्यः स्यात्तु मन्त्रिणि ।
अमात्यमपि चाहुस्तमादित्यो रविदेवयोः ॥
आम्नायो निगमे चोपदेशे स्यादतिथौ पुनः ।
आतिथ्यश्चातिथ्यर्थे[1] स्यादातिथ्यं वाच्यलिङ्गकम् ॥
आशयः स्यादभिप्राये स्थानमात्रे तथाऽऽश्रये[2] ।
आत्रेयी स्यात्पुष्पवत्यां नदीभेदे मुनौ तु ना ॥
इन्द्रियं तु हृषीके स्यादिन्द्रियं चेतसि स्मृतम् ।
उपायः स्यादुपगतौ सामादौ च निगद्यते ॥
ऊर्णायुः क्षणभङ्गे [3]स्यान्मेढ्रकम्बलमेषयोः ।
ऐश्वर्यं त्वणिमादौ स्याद्भाग्ये चैश्वर्यमीरितम् ॥
औचित्यमुचितत्वे स्यात्सत्येऽप्यौचित्यमीरितम् ।
कषायो रसभेदे च निर्यासे च विलेपने ॥
अङ्गरागे च न स्त्री स्यात्सुरभौ लोहितेऽपि च ।
कालेयः स्याद्दैत्यभेदे कालेयं कालखण्डके ॥
कार्पण्यं तु मतं दैन्ये कुलायः स्थाननीडयोः ।
गवयः पशुभेदे स्यात्तथा वानरभिद्यपि ॥
गाङ्गेयस्तु मतो भीष्मे क्लीबं स्वर्णकशेरुणोः[4] ।
ग्रैवेयं तु मतं ग्रीवाऽलङ्कारादौ स्ववाच्यवत् ॥
चक्षुष्यः केतकीदृष्टे पुण्डरीके रसाञ्जने ।
कुलत्थिकासुभगयोः [5]स्त्रियामक्षिहितेऽन्यवत् ॥

---

१ दर्थे, इति मा. ।
२ थोदरे, इति मा. ।
३ स्यान्नौच्छ, इति मा. ।
४ सेरुणे, इति मा. ।
५ चक्षुष्यभि, इति मा. ।

चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे ।
जघन्यं चरमे क्लीबं मेहने गर्हितेऽपि च ॥
जटायुर्गुग्गुले पुंसि सम्पाते च कनीयसि ।
जरायुरपि तत्पक्षिराजे गर्भाशयेऽपि च ॥
तपस्यः फाल्गुने मासि तपस्या [1]नियमस्थितौ ।
देवयुर्धार्मिके ख्यातो देवयुर्लोकयाचिके ॥
नादेयी नागरङ्गे स्याज्जयायां जलवेतसे ।
भूमिजम्ब्वां च तर्कार्यां व्यङ्गुष्ठे[2]ऽपि समीक्ष्यते ॥
निकायो निलये लक्ष्ये संहतानां समुच्चये ।
एकार्थभाजिनि व्यूहे परमात्मनि चेष्यते ॥
निर्दयो निर्घृणे क्रूरे नेपथ्यं स्यात्प्रसाधने ।
नेपथ्यं रङ्गभूमौ च नाट्योक्तौ परिकीर्त्यते ॥
प्रणयः प्रेम्णि विस्रम्भे याञ्चाप्रसरयोरपि ।
विनये प्रलयो मृत्यौ मूर्च्छाकल्पान्तयोरपि ॥
प्रत्ययः शपथे रन्ध्रे [3]सन्नादिज्ञानयोरपि ।
आचारे प्रथितत्वेऽपि विश्वासाधीनहेतुषु[4] ॥
पर्जन्यः स्यान्मेघशब्दे ध्वनदम्बुदशक्रयोः ।
प्रसव्यं स्याद्वाच्यलिङ्गं प्रतिकूलानुकूलयोः ॥
प्रकीर्यः पूतिकरजे विप्रकीर्णे तु वाच्यवत् ।
प्रणाय्यो[5]ऽसम्मतेऽपि स्यादभिलाषविवर्जिते ॥

१ तुन्नत, इति मा. ।
२ तायाया काङ्गुष्ठे, इति मा. ।
३ सम्बा, इति मा. ।
४ यो तुषु, इति मा. ।
५ म्यो, इति मा. ।

पयस्या[1] क्षीरकाकोल्यां पयोहितभवेऽन्यवत् ।
पयस्या दुग्धिकायां स्यात्स्वर्णक्षीर्यां च कथ्यते ॥
प्रतीक्ष्यस्तु भवेत्पूज्ये लक्ष्ये ज्येष्ठे च राजनि ।
पारुष्यो [2]गीष्पतौ क्लीबे दुर्वाक्यपरुषत्वयोः ॥
पानीयं तु जले क्लीबं पातव्ये वाच्यलिङ्गवत् ।
पुलस्त्यो मुनिभेदे स्यात्पौलस्त्यस्तु विभीषणे ॥
दशग्रीवे कुबेरे च पौलस्त्यः कुम्भकर्णके ।
वलयः कण्ठरोगे स्यात्क्लीबं स्यात्करभूषणे ॥
ब्रह्मण्यः स्याद्ब्रह्मसाधुब्रह्मदारुशनैश्चरे ।
ब्राह्मण्यं ब्राह्मणत्वे स्याद्ब्राह्मणानां च संहतौ[3] ॥
बालेयः स्याद्गर्दभेऽपि मृदौ [4]बालहिते त्रिषु ।
भुवन्युः पुंसि भानौ स्याच्चन्द्रे[5] च ज्वलनेऽपि च ॥
भुजिष्या गणिकादास्योः, सूत्रहस्तकदासयोः ।
स्वतन्त्रेऽपि भुजिष्यः स्यान्मलयः पर्वतान्तरे ॥
शैलांशे देश आरामे चित्रतायामपि स्त्रियाम् ।
मङ्गल्या स्यादधःपुष्पीमिसीशुक्लवचास्वपि ॥
त्रायमाणाऽश्वत्थबिल्वशमीमसूरकेष्वपि[6] ।
[7]रोचनायामथो दध्नि क्लीबं मङ्गलकारिणि ॥
मृगयुस्तु भवेद्व्याधे गोमायौ परमेष्ठिनि ।
म्लेच्छास्यं गदितं ताम्रे यथा रक्तमुदुम्बरे ॥

---

१ पयः स्यादिति मा. । २ गीष्ध, इति मा. । ३ हितौ, इति मा. ।
४ बलि, इति मा. । ५ चण्डे, इति मा. ।
६ पुसीति शेषः, त्रायमाणा तु स्त्रियाम् । ७ स्त्रियामित्यादिः ।

रहस्यं गोपनीये स्याद्रहस्या स्त्री नदीभिदि ।
लौहित्यः [1]स्यान्नदभिदि लौहित्यं लोहितत्ववत्[2] ॥

वदान्यः स्याच्चाटुशब्दे दानशौण्डेऽपि कीर्तितः ।
व्यवायः सुरतेऽन्तर्धौ[3] पुंसि क्लीबं तु तेजसि ॥

वक्तव्यं वचनार्हे स्याद्धीनकुत्सितयोरपि ।
विजयस्तु जये पार्थे विजया च तिथौ क्वचित् ॥

विस्मयस्तु रसाश्चर्यमदेषु च तथा पुनः ।
विशल्या त्रिपुटादन्तीगुडूच्यग्निशिखासु च[4] ॥

विनया[5] तु बलायां स्याच्छिक्षायां प्रणतावपि ।
विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च ॥

गोचरे च प्रबन्धाद्यो यस्य ज्ञातः स तत्र वै ।
विषयी विषयासक्ते वाच्यवत्क्लीबमिन्द्रिये[6] ॥

पुंसि स्यान्नृपतौ कामदेवे वैषयिके[7]ऽपि च ।
श्वश्रूर्यो देवरे श्याले [8]मालूरे मुनिभिद्यपि ॥

शालेयः शतपुष्पायां क्षेत्रे शाल्युद्भवेऽपि च ।
शीर्षण्यस्तु सुकेशे स्यात्तथाक्लीबं तु शीर्षके ॥

शैलेयं सिन्धुलवणे तालपर्ण्यां च शैलजे ।
[9]शिलातुल्ये च मधुपे संस्त्यायः सन्निवेशने ॥

---

१ स्यान्मदु, इति मा. । २ तेऽन्यवदिति मा. । ३ तरद्धौं, इति मा. ।
४ गुडूचीत्रिपुरादन्ती विशल्योऽग्नि मुखासु च, इति मा. ।
५ जया, इति मा. । ६ मद्विये, इति मा. । ७ मिके, इति मा. ।
८ शाण्डिल्यो, इत्यादिः । ९ शिखा, इति मा. ।

विस्तृतावपि संस्थाने संस्त्यायः परिपद्यते ।
सन्नायः[१] समवायेऽपि पृष्ठस्थायिबले पुमान् ॥

समयः शपथाचारसिद्धान्तेषु तथा धियि ।
सङ्केते च क्रियाकारे निर्देशे कालभाषयोः ॥

[२]सरण्युर्वारिवाहेऽपि स्यात्तथा पवनेऽपि च ।
[३]शक्तौ च योग्यतायां च सामर्थ्यं चाभिधीयते ॥

सौरभ्यमाहुः सौगन्ध्ये चारुत्वे गुणगौरवे ।
सौकर्यं स्यादनायासे क्रियायां सूकरस्य च ॥

हिरण्यं [४]रेतसि द्रव्ये मानभेदेऽक्षयेऽपि च ।
तथाऽकुप्ये शातकुम्भे वराटेऽपि निगद्यते ॥

हृदयं मानसे [५]बुक्कोरसोरपि नपुंसकम् ।
क्षत्रियो बाहुजेऽपि स्यात्तथा भूमीपतावपि ॥

क्षिपण्युः सुरभौ देहे क्षेत्रियं[६] क्षेत्रसम्भवे ।

॥ इति यतृतीयम् ॥

---

॥ अथ यचतुर्थम् ॥

[७]भवेदनुशयो द्वेषे [८]पश्चात्तापानुबन्धयोः ।
अवश्यायस्तु नीहारेऽप्यभिमानेऽपि कीर्तितः ॥

---

१ साधुः, प्रज्ञाद्यणि ।
२ सवन्यू, इति मा. ।
३ सु, इति मा. ।
४ चे, इति मा. ।
५ वृक्का, इति मा. ।
६ त्रायमिति मा. ।
७ अनुशय्यो भवेद्वेषे, इति मा. ।
८ पश्ना, इति मा. ।

अन्तशय्या मृतौ भूमिशय्यायां पितृकानने ।
अपसव्यं वाच्यलिङ्गं दक्षिणप्रतिकूलयोः ॥
अन्वाहार्यममाश्राद्धे [1]मुखदक्षिणयोरपि ।
अलिप्रियं वारिजे स्याद्रसाले स्यादलिप्रियः ॥
अमीजयो ? गजारोहेऽभिनयो भावदर्शने ।
अभिप्रायो मनोवृत्तावभिधेयं तु नामनि ॥
अविनेयस्तु दुर्वृत्तेऽवजयस्तु पराजये ।
उपकार्या राजसद्मन्युपकारोचितेऽन्यवत् ॥
जलाशयो जलाधारे स्यादुशीरे जलाशयम् ।
तण्डुलीयः शाकभेदे विडङ्ग[2]तरुताप्ययोः ॥
तृणशून्यं मल्लिकायां तथा स्यात्केतकीफले ।
धनञ्जयोऽर्जुने चाग्निनागभिद्देहमारुते ॥
निरामयस्तु नीरोगे [3]त्रिषु स्यादिडिक्के पुमान् ।
परिधायो जलस्थाने परिच्छेदनितम्बयोः ॥
प्रतिश्रयः सभायां स्यादाश्रयेऽपि परिश्रयः ।
परिसङ्ख्या तु सङ्ख्याने विधावपि निवर्तके ॥
प्रतिभयं भये घोरे पाञ्चजन्योऽग्निशङ्खयोः ।
प्रावृड्भवे प्रावृषेण्यं नीपे[4] तु स्यात्पुमानयम् ॥
पूर्वकायस्तूर्ध्वदेहे गदितः शब्दवेदिभिः ।
पौरुषेयो विक्रमेऽपि विकारे पुरुषस्य च ॥

---

१ नान्दी, इत्यादिः । २ स्तल, इति मा. ।
३ तथा स्यात्पिञ्जके त्रिषु, इति मा. । ४ नीये, इति मा. ।

त्रिषु ना सङ्घवधयोः पुरुषस्य पदान्तरे ।
फलोदयस्तु लाभे स्यादपि स्वर्गे फलोदयः ॥
भागधेयं तु भाग्ये स्याद्भागप्रत्यययोरपि ।
महालयो विहारे स्याद्भाद्रपक्षेऽपरेऽपि च ॥
महालयं तीर्थभेदे पुमांस्तु परमात्मनि ।
महोदयः कान्यकुब्जे [1]चाधिपत्यापवर्गयोः ॥
महामूल्यं महार्घेऽपि रत्नेऽपि च नपुंसकम् ।
मार्जारीयोऽङ्गसंशुद्धौ तथा मार्जारसङ्गते ॥
मार्जारीयः पुमाञ्छूद्रे बिडाले कायशोधने ।
रौहिणेयोऽन्यवद्वत्से ना बुधे च हलायुधे ॥
बिलेशयस्तु भुजगे [2]मूषकेऽपि च कथ्यते ।
वैनतेयो विष्णुरथेऽप्यरुणेऽपि प्रकीर्तितः ॥
सम्परायस्तु विपदि समीकोत्तरकालयोः ।
समाह्वयस्तु पशुभिः खगैर्द्यूते[3] च सङ्गरे ॥
समुदायः[4] स्मृतः सङ्घे सङ्गरेऽपि समुद्गमे ।
समुच्छ्रयस्तु गदितो विरोधोत्सेधयोरपि ॥
[5]सुखोदयस्तु चामद्यभेदे पक्वेक्षुजे रसे ।
स्थूलोच्चयो गण्डशैले गजानां मध्यमे गते ॥
असाकल्ये वरण्डेऽपि शक्रे हरिहयः स्मृतः ।
हिरण्मयः सुरश्रेष्ठे हिरण्यविकृतावपि ॥

॥ इति यचतुर्थम् ॥

---

१ चाधिपस्या, इति मा. । २ मूख, इति मा. । ३ खगे द्यूते, इति मा. ।
४ मूदयः, इति मा. । ५ सार्धश्लोको मातृकायां यपञ्चमेऽभूत् ।

॥ अथ यपञ्चमम् ॥

अन्तावसायी श्वपचे मुनिभेदे च नापिते ।
कडङ्गरीयो बुसभुग्वृषादौ परिकीर्तितः ॥
कालानुसार्यं शैलेये कालीये शिंशपाद्रुमे ।
[1]क्षीरतालीयमित्युक्तं दुग्धाम्रक्षीरफेनयोः ॥
ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम् ।
अथ प्रवचनीयं तु स्यात्प्रवक्तृप्रवाच्ययोः ॥
वृषाकपायी श्रीगौरीवरीजीवन्तिकास्वपि ॥

॥ इति यपञ्चमम् ॥

---

॥ अथ यषष्ठम् ॥

प्रत्युद्गमनीयमुपस्थेये धौतांशुकद्वये ।
विष्वक्सेनप्रिया लक्ष्म्यां वाराह्यामपि गद्यते ॥
हरिणहृदयो भीरौ कथितः शास्त्रपारगैः ॥

॥ इति यषष्ठम् ॥

---

॥ अथ यसप्तमम् ॥

तुरगब्रह्मचर्यं तत् स्त्र्यभावाद्ब्रह्मचर्यके ॥

॥ इति यसप्तमम् ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये यान्तवर्गः ॥

---

१ दुग्धतालीयमित्यन्यत्र ।

॥ अथ रान्तवर्गः ॥

॥ अथ रैकम् ॥

रः स्मये जलदे तीक्ष्णे वह्नौ राः स्वर्णवित्तयोः ।
रीर्भूमौ रुर्भये [1]हृर्ये द्रुस्तरौ च निगद्यते ॥

त्रिस्तु सङ्ख्याविशेषे स्याद्ध्रीर्लज्जायां प्रकीर्तिता ।
श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे ॥

लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे मतः ।
स्रुः स्रवे[2] निर्झरे चापि द्रुः स्वर्णे कामरूपिणि ॥

॥ इति रैकम् ॥

---

॥ अथ रद्वितीयम् ॥

अस्मिन्नर्थेऽव्ययं चात्र त्वङ्घ्रिः पादाश्रयोरपि ।
अत्रिः स्त्री काष्ठकुद्दाले स्यादत्रिर्मुनिभिद्यपि ॥

अत्रिः शुचौ पुमान् मर्मण्यरुरित्यभिधीयते ।
अरं शीघ्रे च चक्राङ्गे शीघ्रगे पुनरन्यवत् ॥

अग्रं पुरस्तादुपरि परिमाणे पलस्य च ।
आलम्बने समूहे च प्रान्तेऽपि स्यान्नपुंसकम् ॥

प्रधाने चाधिके चापि प्रथमे वाच्यलिङ्गवत् ।
अस्रमश्रुणि रक्ते स्यादस्रः स्यात्कचकोणयोः ॥

---

१ शब्द् इत्यन्ये ।   २ स्रुस्रुवे, इति मा. ।

अस्त्रं तु करवाले स्याच्चापे प्रहरणेऽपि च ।
अभ्रं[1] स्यादभ्रके स्वर्णे मेघे च गगनेऽपि च ॥
अद्रिः शैले द्रुमे चार्केऽप्यारो भौमे शनैश्चरे ।
आरा चर्मप्रभेदिन्यामारं [2]चक्र उदीरितम् ॥
आर्द्रा [3]नक्षत्रभेदे स्यादार्द्रं क्लिन्न उदीरितम् ।
आरुस्तरुविशेषे स्यात्तथा कर्कटदंष्ट्रिणोः ॥
आन्ध्रो[4] नीवृज्जातिभेदेऽप्यान्त्रं त्ववयवान्तरे ।
अभ्रसम्बन्धिनि त्वाभ्रं[5] चाम्रः स्याच्चूतपादपे ॥
इन्द्रः शक्रादित्यभेदे योगभेदान्तरात्मनोः ।
इन्द्रा फणिज्जके स्त्री स्यादिरा भूवाक्सुरासु च ॥
ईरी तु करवालिन्यां उग्रो रुद्रे विषूत्कटे[6] ।
क्षत्राच्छूद्रासुतेऽप्युग्रः स्यादुग्रचाक्षुद्रयोः स्त्रियाम् ॥
उस्रो वृषे च किरणेऽप्युस्राऽर्जुन्युपचित्रयोः ।
[7]उरु पीने मतं क्लीबमूरुस्त्ववयवान्तरे ॥
उष्ट्रः क्रमेलके प्रोक्तश्चेन्द्रिः काकेन्द्रपुत्रयोः[8] ।
ऐन्द्री स्यादिन्द्रसम्बन्धिन्यैन्द्री प्राच्यां दिशि स्मृता ॥
ओड्राः[9] पुम्भूम्नि देशे स्यादोड्रस्तु तरुभिद्यपि ।
करो वर्षोपले पाणौ रश्मौ प्रत्यायशुण्डयोः[10] ॥

---

१ स्त्वमिति मा. । २ कोणे, इति परे । ३ ऋक्षप्र. इति मा. ।
४ ध्रो, इति मा । ५ त्रमिति मा. । ६ मूलके, इति मा. ।
७ उरुः स्त्रियामुरु क्लीबे मतस्त्ववयवीतरे इति मा. ।
८ के, इति मा. । ९ औन्द्र, इति मा. । १० न्त्रयोरिति मा. ।

काम[1] तु वाच्यवत्काम्ये करी तु स्यान्मतङ्गजे।
कद्रुर्मातरि नागानां कद्रुः कनकपिङ्गले॥
कर्चौ स्त्री कर्तृकायां स्यात्कारा दूत्यां प्रसेवके।
कारो वधे निश्चयेऽच बलौ [2]यत्ने यतावपि॥
कारस्तु स्वर्णकारे स्यात्तुषाराद्रावपि स्मृतः।
कारा तु बन्धनागारे बन्धनेऽपि च योषिति॥
कारिः[3] स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनि।
विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः॥
किरिः किटौ शुके[4] कीरः कुरुर्भक्ते नृपान्तरे।
देशान्तरेषु पुम्भूम्नि क्रूरः स्यात्कठिनेऽपि च॥
नृशंसघोरयोश्चापि कृच्छ्रं कष्टेऽप्यघापहे।
क्रोष्ट्री शृगालिकाकृष्णविदारीलाङ्गलीषु च॥
खरस्तीक्ष्णे च घर्मे च देवताडेऽथ गर्दभे।
खरुर्दर्पे हये शम्भौ खारी मानप्रभेदके॥
खुरः शफे [5]कोलदले गरस्तूपविषे विषे।
गरी खरायां करणे[6] गात्रमङ्गे कलेवरे॥
स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरितम्।
गारा तूपलभेदे स्याद्गिरा वाग्देवतागिरोः॥
गिरिर्गीर्णौ गिरियके[7] क्रीडागण्डकशैलयोः।
नेत्रामयविशेषे च पूज्ये तु गिरिरन्यवत्॥

१ इदमत्राप्रासङ्गिकम्। २ र, इति मा.। ३ करिरिति मा.।
४ सुके, इति मा.। ५ कोक, इति मा.।
६ क्लीबमिति शेषः। ७ यंच्चे, इति मा.।

गुरुर्निषेकादिकरे पित्रादौ गीष्पतावपि ।
वाच्यलिङ्गं त्वलघुनि तथा महति दुर्जरे ॥
गुन्द्रस्तेजनकद्रव्ये [1]मुस्तायामपि योषिति ।
गृध्रस्तु पक्षिभेदे स्याल्लुब्धकेऽपि च वाच्यवत् ॥
गोत्रं नाम्नि[2] कुले गोत्रः शैले गोत्रा गवि[3] क्षितौ ।
सम्भावनीयबोधे च [4]काननक्षेत्रवर्त्मसु[5] ॥
गौरश्चन्द्रेऽरुणे पीते श्वेते शुद्धे च सर्षपे ।
पुंसि क्लीबे च कथितो गौरः पङ्कजकेसरे ॥
गौरी त्वसञ्जातरजःकन्याशङ्करयोषितोः ।
रोचनीरजनीपिङ्गाप्रियङ्गुवसुधासु च ॥
आपगाया विशेषेऽपि तथा वरुणयोषिति ।
घस्रस्तु दिवसे हिंस्रे घोरो भीमे भयानके[6] ॥
चरोऽक्षद्यूतभेदे स्याद्भौमे चारे चसे चले[7] ।
चन्द्रः [8]कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु ॥
चक्रः कोके पुमान्क्लीबं राष्ट्रे च वज्रसैन्ययोः ।
दम्भान्तरे कुलालोपकरणे वारिजास्त्रयोः ॥
चक्री तैलिकभित्कोककुलालाजाहिसूचके ।
चरुर्हव्येऽन्नभाण्डे च चमौ भूर्जतरौ पुमान् ॥
चमौं [9]फलकहस्ते च तथा पर्णायतेऽपि च ।
चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः ॥

---

१ गुन्द्रा । २ स्नि, इति मा. । ३ गव्ये, इति मेदिनी ।
४ क्रेत, इति मा. । ५ क्लीबमिति प्रोषः । ६ हरेऽपि चेत्यन्यत्र ।
७ द्रुसेचने, इति मा. । ८ कदरिकम्पि, इति मा. । ९ खेट, इति मा. ।

चारुस्तु गीष्पतौ पुंसि शोभने त्वभिधेयवत् ।
चीरं तु गोस्तने वस्त्रे चूडायां सीसकेऽपि च ॥
चीरी [१]कच्छाटिकाझिल्ल्यो रेखालेखनभेदयोः ।
चित्रोऽग्निपादपे चित्रमद्भुते शबलेऽपि च ॥
चित्राऽऽखुपर्णीगोडुम्बासुभद्रादन्तिकासु च ।
मायायां सर्पनक्षत्रनदीभेदेषु च स्त्रियाम् ॥
तिलकालेख्ययोः[२] क्लीबं चुक्रं[३] वृक्षाम्लके मतम् ।
चौरः पाटच्चरेऽपि स्याच्चौरपुष्पौषधावपि ॥
छत्रा मधुरिकायां स्त्री छत्रमातपवारणे ।
छत्रा मिसावतिच्छत्रे कुस्तुम्बुरु[४]शिलीन्ध्रयोः ॥
छत्री महीपतौ पुंसि छिद्रं दूषणरन्ध्रयोः ।
छात्रः शिष्ये निगदितो राक्षस्यापलिते जरा ॥
ज्वरस्तु परितापे स्याद्रुग्भेदेऽपि मतो ज्वरः ।
जारी स्त्रियामौषधे स्याज्जारस्तूपपतौ[५] मतः ॥
जीरस्तु जरणे[६] खड्गे झरस्तु जलनिर्गमे ।
झारी भृङ्गारके प्रोक्ता टारो [७]लङ्गतुरङ्गयोः ॥
तरस्तु तरणे पुंसि [८]कृशानौ पेटके तरी ।
तन्त्रं प्रधाने सिद्धान्ते कुटुम्बपरिपोषणे ॥
औषधे तन्तुवाये च शास्त्रभेदे परिच्छदे ।
श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके ॥

---

१ "कच्छोटिवाप्ति" इति मा. ।
२ लिकयोरिति मा. ।
३ ल्कमिति मा. ।
४ वरी, इति मा. ।
५ मतौ, इति मा. ।
६ वने, इति मा. ।
७ नग, इति मा. ।
८ द, इति मा. ।

इति कर्तव्यतायां च तन्त्री वीणागुणे स्त्रियाम् ।
अमृतादेहसिरयोस्तन्त्री स्याच्छास्त्रवेदिनि ॥
तन्द्री स्त्रियां प्रमीलायां तस्मिन्नर्थे तु तत्र च ।
तारो मुक्ताविशुद्धौ स्यात्तारके[1] शुद्धमौक्तिके ॥
ना नक्षत्रेऽक्षिमध्ये च तारं रूप्ये नपुंसकम् ।
स्त्री बुद्धदेवताभेदे वालिगीष्पतिभार्ययोः ॥
तारः स्यादुच्चशब्देऽपि ताम्रं[2] शुल्वेऽरुणेऽपि च ।
तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः ॥
त्रिष्वत्युष्णे नितान्तेऽपि कटौ तीरं तु रोधसि ।
पुंसि त्रपुणि तोत्रं तु [3]प्राजने वेणुकेऽपि च ॥
दस्रः खरेऽश्विनीसूनौ दरो गर्ते च साध्वसे ।
दरी तु कन्दरायां स्त्री मनागर्थे दराऽव्ययम् ॥
दंष्ट्री किटावहौ व्याघ्रे[4] दभ्रं क्लीबे कृशे मतम् ।
दारा भूम्नि च भार्यायां केचिदाहुः स्त्रियामपि ॥
अथ पुंस्यपि दाराः स्याद्दात्रं [5]लवनसाधने ।
दारुः स्यात्पित्तले काष्ठे देवदारौ नपुंसकम् ॥
द्वारं निर्गमनेऽपि स्यादभ्युपाये धरो गिरौ ।
कार्पासतूलके कूर्मराजे वस्वन्तरेऽपि च ॥
दूरं त्वसन्निधौ दोरः सूत्रे चापि प्रकीर्तितः ।
धरा पृथिव्यां गदिता स्त्री गर्भाशयमेदसोः ॥

---

१ त्रारके, इति मा. ।   २ द्यमिति मा. ।   ३ तोद, इति मा. ।
४ चह्नो व्याघ्रे, इति मा. ।   ५ वल, इति मा. ।

धात्री धरामलक्योः [1]स्याद्धात्री मातृपमातृषु ।
[2]धारा सैन्याग्रदेशे च तुरङ्गगतिपञ्चके ॥
घटादिच्छिद्रसन्तत्योः प्रपाते स्याद्द्रवस्य च ।
खड्गादेर्निशिते देशे धारा [3]ग्रावान्तरेऽपि च ॥
धीरः स्वैरे बुधे धैर्यान्विते क्लीबं तु कुङ्कुमे ।
धौत्रं नृपरिधानीये नरोऽजे [4]मनुजेऽर्जुने ॥
क्लीबं तु रामकर्पूरे नक्रं[5] नासाग्रदारुणोः ।
नक्रः कुम्भीरके पुंसि [6]नारस्तर्णकनीरयोः ॥
नध्री तु स्याद्वरत्रायां नारं[7] स्यान्नरसंहतौ ।
[8]निद्रा स्वापे च संवेशे नीरं तु सलिले मतम् ॥
नीध्रं नेमौ [9]वलीके च रेवतीभे च कानने ।
नेत्रं मथिगुणे वस्त्रभेदे मूले तरोरपि ॥
रथे चक्षुषि नद्यां च नेत्री नाड्यां[10] च योषिति ।
परः श्रेष्ठारिदूरान्योत्तरे[11] क्लीबं तु केवले ॥
पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणोः ।
पारं परतटे याचामात्रे स्याद्राजनं त्रिणि ? ॥
प्रान्तेऽस्त्रियां [12]नदीभेदे [13]पारी पूरेऽन्वगद्यते ।
दन्तिनः पादबन्धे च कर्कर्यां च [14]स्रुवादिके ॥

---

१ स्याद्धरा, इति मा. । २ सैन्यस्याग्रप्रदेशे, इति मा. ।
३ ग्रामा, इति मा. । ४ मर्जुने, इति मा. ।
५ भक्तमिति मा. । ६ तथाप, इति मा. ।
७ पारमिति मा. । ८ निद्रा शुभौ च सङ्कोचे, इति मा. ।
९ न, इति मा. । १० रथनाभ्यामिति मा. । ११ रसे, इति मा. ।
१२ वारि, इति मा. । १३ पारा, इत्यादिः । १४ पात्रमित्यादिः ।

तीरद्वयान्तरे योग्ये, पुरुः प्राज्येऽभिधेयवत् ।
भूपभेदे परागे च देवलोके च पुंस्ययम् ॥
पुरं गृहोपरिगृहे शरीरे च नपुंसकम् ।
तथा पाटलिपुत्रेऽपि गेहमात्रे पुरं विदुः ॥
पुष्पादीनां दलावृत्तौ गुग्गुलौ ना न ना पुरि ।
पुण्ड्रोऽतिमुक्तके चित्रे कृमौ दैत्येक्षुभेदयोः ॥
पुंभूम्नि देशभेदे स्यात्पुण्डरीके नपुंसकम् ।
पूरो जलसमूहेऽपि व्रणसंशुद्धिखाद्ययोः ॥
पोत्रं वज्रे[1] मुखाग्रे च सूकरस्य हलस्य च ।
पौरं त्रिषु पुरोद्भूते कत्तृणे तु नपुंसकम् ॥
बभ्रुस्तु गरुडे[2] वह्नौ नकुले च महेश्वरे ।
पिङ्गले वाच्यलिङ्गः स्याज्जम्बूके फेरुरुच्यते ॥
भस्त्रा तु चर्मपेश्यां स्याद्भरोऽतिशयभारयोः ।
भरुः स्वर्णे हरे पुंसि भद्रस्तु वृषभे शिवे ॥
खञ्जरीटे कदम्बे च भद्र इत्यभिधीयते ।
करिभेदे, तथा क्लीबं मतं मङ्गलमुस्तयोः ॥
काञ्चने च स्त्रियां [3]रास्नाकृष्णाव्योमनदीषु च ।
तिथिभेदे प्रसारिण्यां [4]कट्फलाऽनन्तयोरपि ॥
त्रिषु श्रेष्ठे तथा साधौ न पुंसि करणान्तरे ।
भारः स्याद्वीवधे विष्णौ पलानां द्विसहस्रके ॥

---

१ वस्त्रे, इति मा. ।  २ गरुडध्वजे, इत्यपरे ।
३ नाग्ना, इति मा. ।  ४ कल्व, इति मा. ।

भाद्रस्तु मासभेदे स्याद्भाद्रं तत्प्रभवे मतम् ।
भीरुरार्ते च योषायां वरयोषिति च स्त्रियाम् ॥
भूरिर्ना वासुदेवेऽपि हरेऽपि परमेष्ठिनि ।
क्लीबं सुवर्णे प्राज्ये तु वाच्यलिङ्गमुदीरितम् ॥
भेरी वाद्यप्रभेदे स्याद्भौमस्वर्णमयेऽखिले ।
मन्त्रस्तु गुह्यवादे स्याद्देवादीनां च साधने ॥
वेदभागविशेषे च मन्त्री तद्वि(द)मात्यके ।
मन्द्रः स्वरविशेषेऽपि माद्री [1]पाण्डोश्च योषिति ॥
मात्रा कर्णविभूषायां माने वित्ते परिच्छदे ।
अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्ये [2]ऽवधारणे ॥
मारः स्मरे मृतौ[3] विघ्ने मारी देव्यां जनक्षये ।
मारिः स्त्री[4] मारणे वर्षे [5]मित्रं सख्यौ च भेषजे ॥
लग्नाच्चतुर्थराशौ च पुंसि सूर्ये प्रकीर्तितः ।
मुरा गन्धौषधौ मूत्रं मलभेदे निगद्यते ॥
मेरुः सुराद्रौ मेढ्रं तु शेफसि क्लीबमीरितम् ।
मैत्रं तु जातकृत्ये स्यान्मित्रसम्बन्धवत्यपि ॥
यस्मिन्नर्थे तु यत्रेति यन्त्रं तु स्यान्नियन्त्रणे ।
देवतायतने चापि तथा युद्धादिसाधने ॥
यात्रोत्सवे च गमने यात्रा स्याद्यापनेऽपि च ।
योक्त्रं तु रज्जुभेदे स्यात्तथैवावयवान्तरे ॥

---

१ प, इति मा. ।
२ च, इति मा. ।
३ मृत्याविति परे ।
४ री च, इति मा. ।
५ मित्रः सूर्ये च दानवे । गन्धद्रव्येऽस्त्रियां क्लीबे मतं सुहृदि सद्गुणे, इति मा. ।

रन्ध्रं [1]स्याद्दूषणे छिद्रे राष्ट्री स्यादौषधेऽप्यथ ।
राष्ट्रस्तूपद्रवे क्लीबं तथा स्यादुपवर्तने ॥
रात्रिर्हरिद्रायामिन्यो रुरुर्दैत्ये [2]मृगेऽपि च ।
रुद्रस्तूग्रे महादेवे रेत्रं[3] क्लीबे तु रेतसि ॥
पीयूषे पटवासेऽपि सूतके परिकीर्तितम् ।
रौद्रो रसान्तरे रौद्रमुग्रे रुद्रोद्भवेऽपि च ॥
रौद्री चण्ड्यामपि ख्याता लोध्रं स्यादौषधान्तरे ।
वरो जामातरि वृते देवतादेरभीप्सिते ॥
षिङ्गे[4] पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम् ।
वरी प्रोक्ता शतावर्यां वरा तु स्यात्फलत्रिके ॥
मनागिष्टे वरं क्लीबे केचिदाहुस्तदव्ययम् ।
वक्रः शनैश्चरे पुंसि पुटभेदे नपुंसकम् ॥
त्रिषु क्रूरे च कुटिले वज्रो योगान्तरे तथा ।
वज्रः कृष्णस्य दायादे वज्रं धात्र्यां च बालके ॥
वज्रा गुडूच्यां कुलिशे मतं क्लीबे च पुंसि च ।
वज्री महेन्द्रे पुंसि स्यात्स्नुह्यां वज्री मता स्त्रियाम् ॥
[5]वज्रोऽस्त्री हीरके वध्रं क्लीबे त्रपुवरत्रयोः ।
वप्रः सानौ पुमानस्त्री रेणौ क्षेत्रे चये तटे[6] ॥
वक्त्रं मुखे वृत्तभेदे व्यग्रो व्यासक्त आकुले ।
वध्री प्रोक्ता वरत्रायां वास्रो ना दिवसे मतः ॥

---

१ स्याद्दू, इति मा. । २ मृते, इति मा. । ३ रेवमिति मा. ।
४ खिङ्गे, इति मा. । ५ हीरकेऽपि न वेद्यस्त्री, इति मा. ।
६ वेणौ क्षेत्रे च पेटके, इति मा. ।

वास्तं तु मन्दिरे क्लीबं तथैव च चतुष्पथे ।
व्याघ्रः स्यादपि शार्दूले रक्तैरण्डे करञ्जके ॥
व्याघ्रः पराक्रमयुते[1] कण्टकार्यां तु योषिति ।
व्याघ्रं व्याघ्रनखे क्लीबं वारी स्याद्गजबन्धने ॥
वारः सूर्यादिदिवसे वृन्दावसरयोः क्षणे ।
द्वारे हरे कुब्जवृक्षे वारं स्याद्वालकेऽम्बुनि ॥
वीरो रसविशेषे स्याद्वीरः शूरे निगद्यते ।
स्त्री सुराक्षीरकाकोलीतामलक्येलवालुके ॥
पतिपुत्रवतीरम्भा[2]विदारीदुग्धिकासु च ।
मल्लपूक्षीरविदार्योः क्लीबं शृङ्ग्यां [3]नलेऽपि च ॥
वीध्रं तु विमले प्रोक्तं विग्रः स्याद्गतनासिके ।
वृत्रो रिपौ[4] घने ध्वान्ते शैलभेदे च दानवे ॥
वेरं कलेवरे नेत्रे वार्ताकौ कुङ्कुमेऽपि च ।
वैरं विरोधे वैरी तु पुमांस्तद्वति कीर्तितः ॥
वोड्री स्त्री [5]पणपादे ना गोनसाहौ झषान्तरे ।
शरस्तु तेजने बाणे दध्यग्रे ना शरं जले ॥
शस्त्रं लोहास्त्रयोः क्लीबं छुरिकायां तु योषिति ।
शक्रो महेन्द्रे कुटजे तथैवार्जुनपादपे ॥
शद्रि[6]र्नाऽम्भोधरे जिष्णौ शरुर्ना कोपवज्रयोः ।
शरुश्च यूपशकले श्वश्रूश्च पतिमातरि ॥

---

१ गौणोऽर्थः ।
२ गम्भारीत्यन्यच्च ।
३ नते, इति मा. ।
४ रौ च, इति मा. ।
५ पल, इति मा. ।
६ त्रि, इति मा. ।

शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे ।
युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च ॥
शारस्तु शबले वाच्यलिङ्गो ना तु समीरणे ।
अक्षोपकरणे चापि क्लीबं ज्ञानेऽपि वारिणि ॥
शास्त्रं तु न द्वयोरागमाज्ञयोश्च निगद्यते ।
शिग्रुः[१] पुमान् वृक्षभेदे शाकमात्रे नपुंसकम् ॥
शिरः क्लीबे नालिकेरे मस्तकेऽपि निगद्यते ।
शिरो ना पिप्पलीमूले स्याद्गमन्यां च योषिति ॥
उशीरे चापि चक्राङ्गे शीघ्रं द्रुतगतौ त्रिषु ।
शुक्रो दैत्यगुरौ मासे तथा वैश्वानरेऽपि च ॥
तथाऽक्षिरुग्भिदि क्लीबं शुक्रं क्लीबे तु रेतसि[२] ।
शूरो नृपतिभेदेऽपि तथा विक्रान्तयोधिनि ॥
शुभ्रः शुक्लोद्दीप्तयोः[३] स्यात्तथैव क्लीबमभ्रके ।
शूद्री शूद्रस्य भार्यायां शूद्रा स्याज्जातिमात्रके ॥
स्वरो ध्वनौ च खड्गादे[४]स्तथा नासासमीरणे ।
उदात्तादौ मध्यमादावकारादावपीष्यते ॥
सरः[५] पुमान्दधिभवे सरं क्लीबे सरस्यपि ।
त्सरुः पुमान् खड्गमुष्टौ यूपस्यावयवे स्वरुः[६] ॥
सत्रं यागविशेषे स्यात्सत्री नित्यान्नदातरि ।
सारो बले स्थिरांशे च न्याय्ये[७] मज्जनि शम्बरे ! ॥

१ ष्टः, इति मा. । २ सुक्रो क्लीबेतरेतसि, इति मा. ।
३ त्रिष्विति शेषः । ४ दौ, इति मा. । ५ सखमिति मा. ।
६ ऽपि च, इति मा. । ७ त्याज्ये, इति मा. ।

धने वायौ वने सान्द्रं वने[1] चापि घने मृदौ ।
[2]स्फारस्तु विकटे पुंसि [3]करकादेश्च बुद्बुदे ॥
सिप्रो निदाघसलिले सिप्रा [4]नद्यन्तरे तथा ।
स्थिरोऽचले शनौ मोक्षे, शालपर्ण्यां[5] स्थिरा भुवि ॥
सीरो[6]ऽर्कहलयोः पुंसि स्फिरं भूरिणि [7]स्फारवत् ।
सिराऽपि कण्डरायां स्यात्सुरा चषकमद्ययोः ॥
सुरः स्याच्चिदशे[8] सूत्रं क्लीबे तन्तुव्यवस्थयोः ।
शास्त्रादिसूचनाग्रन्थे सूरः प्रोक्तो विवस्वति ॥
स्वच्छन्दमन्दयोः स्वैरी हरिश्चन्द्रार्कवायुषु ।
शुकभेकयमाश्वाहिकपिसिंहहरिष्वपि ॥
अजेशशक्रकिरणपिङ्गलोकान्तरेष्वपि ।
हरः शिवे तथा हारिः सन्तानद्यूतभङ्गयोः ॥
पथिकेऽपि पुमान् हारिर्हारो मुक्तासरे युधि ।
हिंस्रा काकादनीमांस्योर्घातके चान्यलिङ्गवत् ॥
हीरा [9]पिपीलिकालक्ष्म्योर्हीरः[10] शङ्करवज्रयोः ।
होरा[11] तु लग्ने राश्यर्धे रेखाशास्त्रभिदोरपि ॥
[12]क्षरस्तु द्रवमात्रे स्यात्क्षारः स्याद्भेषजान्तरे ।
क्षीरं दुग्धेऽपि पयसि क्षीरी त्वन्नान्तरे मतः ॥

---

१ बले, इति मा. । २ स्यार, इति मा. ।
३ कनकादेरिति मेदिनी । ४ नद्यां तथान्तरे इति मा. ।
५ र्णमिति मा. । ६ सरो, इति मा. । ७ स्यार, इति मा. ।
८ नो, इति मा. । ९ पिप्प, इति मा. । १० हरिः, इति मा. ।
११ लोहा, इति मा. । १२ रक्ष, इति मा. ।

क्षीरी वटादिवृक्षे स्यात्क्षुरो वपनसाधने ।
क्षुद्रस्तु कृपणे दुष्टे क्षुद्रा स्यान्मधुमक्षिका ॥
क्षेत्रं सिद्धादिसंस्थाने क्लीबं क्षौरं तु मुण्डने ।
क्षौद्रं[1] मधुविशेषे स्यान्मधुमात्रेऽपि गद्यते ॥

॥ इति रद्वितीयम् ॥

---

॥ अथ रतृतीयम् ॥

अक्षरी वारिधारायामक्षरं ब्रह्मवर्णयोः ।
अक्षरं नाशशून्ये स्यादक्षरः शङ्करे[2] स्मृतः ॥
अदभ्रं बहुले क्लीबमदूरं निकटस्थिते ।
अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवत् ॥
अध्वरः सावधाने स्याद्वसुभेदे तथा क्रतौ ।
अधीरश्चञ्चलमतावधीरा योषितोदिता ॥
अधीरा विद्युति मतावङ्गारं क्लीबमुल्मुके ।
अङ्गारो भूमिजगृहेऽप्यथाग्रं मुसले मतम् ॥
अयोग्रस्तु हले पुंसि स्यादपि प्रासकुन्तयोः ।
अवीराऽपतिपुत्रायां सत्त्वहीने तु वाच्यवत् ॥
अमरस्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे ।
[3]स्त्री गुडुच्यमरावत्योः स्थूणादूर्वाजरायुषु ॥

---

१ रं, इति मा. । २ रो ऋत्विजि, इति मा. ।
३ दूर्वामिरावती स्थूणा गुडूच्यवजरायुषु, इति मा ।

अपरं त्वितरार्थे स्यात्पश्चाज्ञाने च दन्तिनः ।
अर्वाचीनेऽपरं प्राहुर्जरायौ चापरा मता ॥
अन्तरं तु परीधाने भेदे रन्ध्रावकाशयोः ।
आत्मान्तर्धिविनात्मीयबहिर्मध्यावधिष्वपि ॥
अवरं चरमेऽपि स्याङ्गवान्यामवरा मता ।
गजान्त्यजङ्घादेशे चाप्यवरं क्लीबमीरितम् ॥
अम्बरं वाससि व्योम्नि कर्पासे च सुगन्धके ।
अङ्कुरो [1]लोम्नि पानीये रुधिरेऽभिनवोद्भिदि ॥
अजिरं प्राङ्गणे वाते विषये दर्दुरे तनौ[2] ।
अशिरो भास्करे वीतिहोत्रे स्याद्राक्षसान्तरे ॥
अण्डीरः पुरुषे शक्तेऽररं[3] छदकपाटयोः ।
अररस्तु पुमान्सोमेऽप्यगारं मन्दिरे मतम् ॥
अध्वरस्तु मतो यज्ञेऽप्यनूरुः सूर्यसारथौ ।
अमत्रमपि पात्रे स्यादमित्रं वैरिणि स्मृतम् ॥
अगुरु स्यात्तु लघुनि शिंशपायां च जोङ्गके ।
असारं स्यात्तु निःसारे [4]त्वसरुर्ट्क्षभिद्यपि ॥
असुरा रजनी[5]राश्योरसुरो दानवे रवौ ।
अहेरुः स्त्री शतावर्यामासारः प्रसरे मतः ॥
आसारो वेगवृष्टौ स्यात्तथैव स्यात्सुहृद्बले ।
आहारः स्यादाहरणे हारे प्रोक्तश्च भोजने ॥

१ व्यो, इति मा. ।
२ ऽनिले, इति मा. ।
३ वरमिति मा. ।
४ त्वसरीरोग, इति मा. ।
५ वास्योद, इति मा. ।

आसुरी देवताभेदे सिद्धार्थेऽपि मता स्त्रियाम् ।
आशरस्तु स्मृतो वह्नौ तथैव रजनीचरे ॥
स्यादाशिरस्तु कृसर[1] इत्याहुर्बुद्धिशालिनः ।
आकार इङ्गिताकृत्योराभीरो गोप उच्यते ॥
आकरो निकरे रत्नस्थाने श्रेष्ठे च कथ्यते ।
आधारश्चाधिकरणेऽप्यालवालेऽम्बुधारणे ॥
आग्नीध्रो ब्रह्मपुरुषे व्याधिते[2] स्यात्तथाऽऽतुरः ।
आभीरी गोपयोषायामासुरी दितिसन्ततौ ॥
आतरस्तरपण्ये स्यादितरोऽन्यच्च पामरे ।
ईश्वरो मन्मथे शम्भौ नाऽऽढ्ये[3] स्वामिनि वाच्यवत् ॥
ईश्वरी चेश्वरोढायामीश्वरी वृक्षभिद्यपि ।
इत्वर्यसत्यां पथिके क्रूरकर्मणि चोच्यते ॥
उदारो दातृमहतोर्दक्षिणे वाच्यलिङ्गकः ।
उर्वरा सर्वसस्याढ्यभूमौ स्याज्ञूमिमात्रके ॥
उत्तरा दिग्विशेषे स्यात्स्नुषायामर्जुनस्य च ।
विराटतनुजेऽपि[4] स्यादूर्ध्वोदीच्योत्तमेष्वपि[5] ॥
क्लीबे तु [6]स्यात्प्रतिवाक्येऽथोद्धारश्चोद्धृताहृणे ।
उपेन्द्रस्तु मतो विष्णावुत्करो [7]यत्नभूभिदि ॥
उन्दुरुर्मूषके पुंसि चोषरं क्षारमृद्भुवि ।
उच्चारं स्यादुच्चरणे[8] तथा मलविसर्जने ॥

---

१ स्यादासरोपक्करसे, इति मा. । २ घत्वाविले, इति मा. ।
३ नाथे, इति मा. । ४ पुंसीति शेषः । ५ त्रिष्विति शेषः ।
६ स्यात्पती, इति मा. । ७ राशिपुञ्जयोरित्यपरे । ८ चो, इति मा. ।

उत्तारं स्यादुत्तरणे जठरे तूदरं मतम् ।
ऋक्षरं वारिधारायामृक्षरस्त्वृत्विजि स्मृतः ॥
एकाग्रं वाच्यलिङ्गं स्यादेकतानेऽप्यनाकुले ।
ॐकारः प्रणवे चाङ्गीकृतावपि च कीर्तितः ॥
औशीरं शयने प्राहुर्दण्डेऽपि चामरस्य तु ।
उशीरजे वाच्यवत्स्यात्कदरो[1] व्याधिभिद्यपि ॥
क्रकरः[2] क्रकचे दीने करीरेऽद्रेः खगान्तरे ।
कन्धरः स्याद्वारिवाहे ग्रीवायां कन्धरा मता ॥
कच्चरं कुत्सिते तक्रे तथा स्यान्मलदूषिते ।
कणेरुः कर्णिकारे च करिणीवेश्ययोः स्त्रियाम् ॥
कडारः कपिले दासे[3] कबरं लवणाम्लयोः ।
कबरी केशवेशे स्यादुमायां भेषजान्तरे ॥
पृथ्वीतुङ्ग्योश्च कबरी ना रक्षःपापयोरपि ।
करीरः कलशे वृक्षभेदे वंशाङ्कुरेऽपि च ॥
करीरी चीरिकायां च दन्तमूले च दन्तिनाम् ।
कर्बुरो[4] राक्षसे पापे क्लीबं हेमाम्भसोरपि ॥
कर्बुरा[5] कृष्णवृन्तायां शबले वाच्यलिङ्गवत् ।
कर्परस्तु[6] कपाले स्यात्कटाहे शस्त्रभिद्यपि ॥
कञ्जारो जठरे[7] सूर्ये विरञ्चौ[8] वारणे मुनौ ।
कटिचं रसनायां स्याच्चर्माङ्गे कटिवाससि ॥

१ रीको, इति मा. । २ करीरः, इति मा. । ३ सासे, इति मा. ।
४ पूरो, इति मा. । ५ पूरा, इति मा. । ६ पूरस्तु, इति मा. ।
७ कञ्जारोजवरे, इति मा. । ८ ञ्चे, इति मा. ।

कच्छुरा शूकशिम्ब्यां च [1]शटीदुःस्पर्शयोरपि ।
कच्छुरः पुंश्चले कच्छुयुक्ते स्यात्कर्तरी पुनः ॥
भवेत्कर्तनकार्यार्हे कशेरुः कन्दभिद्यपि ।
कर्मारः स्याज्जातिभेदे त्वचिसारे च कीर्त्यते ॥
कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिषु ।
कन्दरस्त्वङ्कुशे पुंसि गुहायां च नपुंसकम् ॥
कंसारिः कथितो विष्णौ कलत्रं श्रोणिभार्ययोः ।
दुर्गस्थाने नृपादीनां कठोरं निष्ठुरे मतम् ॥
कदरः श्वेतखदिरे क्षुद्ररोगेऽपि चेष्यते ।
कस्तूरी स्यान्मृगमदे लताभेदेऽपि गद्यते ॥
कर्पूरं [2]घनसारे स्यात्काण्डीरः काण्डवत्यपि ।
कान्तारः स्यादिक्षुभेदे दुर्गमे च वने बिले ॥
कावेरी स्यात्सरिद्भेदे पण्यनारीहरिद्रयोः ।
काश्मीरं कुङ्कुमेऽपि स्याट्टङ्कपुष्करमूलयोः ॥
कातरश्चञ्चले त्रस्ते कासारः स्यात्सरोवरे ।
काश्मरी मधुपर्ण्यां स्याद्देवयोनौ तु किन्नरः ॥
किशोरो बालमात्रे स्यात्स्त्रियामश्वस्य शावके ।
तैलपर्ण्यां च पुल्लिङ्गस्तरुणावस्थ[3]सूर्ययोः ॥
किर्मीरो ना नागरङ्गे कर्बुरे[4] राक्षसान्तरे ।
किंशारुः स्यात्सस्यशूके विशिखे कङ्कपक्षिणि ॥

---

१ शमीदुस्प, इति मा. ।     २ कदली, इति मा. ।
३ स्वल्प, इति मा. ।     ४ पूरे, इति मा. ।

किङ्करः स्याद्भृतिभुजि कुठारः परशौ मतः ।
कुहरं गह्वरे छिद्रे कुहरी नागभिद्यपि ॥
कुक्कुरः सारमेये ना ग्रन्थिपर्णे तु कुक्करम् ।
कुञ्जरो ऽनेकपे केशे स्त्री धातक्यां च पाटलौ ॥
[1]कूर्मरस्तु कफोणौ स्याज्जानुदेशेऽपि कूर्परः ।
कुमारो युवराजेऽ[2]श्ववाहके बालके शुके ॥
स्कन्दे च वरुणद्रौ ना[3] न द्वयोर्जात्यकाञ्चने ।
कुमारी मारतरुणी[4]नवमाल्योर्नदीभिदि ॥
कन्याऽपराजितागौरी[5]जम्बुद्वीपेषु च स्मृता ।
कुररी पक्षिभेदे स्यात्कुठारुर्द्रुमकौशयोः[6] ॥
कुबेरस्तु धनाध्यक्षे वृक्षभेदेऽपि गद्यते ।
कुठरं मैथिले[7] विद्यात्कुठरं कवले[8] रते ॥
कुठरो दण्डविष्कम्भे धातक्यां कुञ्जरा मताः ।
कूबरः कुब्जके चारौ कूबरस्तु युगन्धरे ॥
कुलीरः स्यात्कर्कटके राशिभेदे च गद्यते ।
नागान्तरे तु कुहरः कुम्भीरो नक्रचोरयोः ॥
कुटीरः कर्कटे गेहे कुचरस्तु खगेतरः ।
केसरी तुरगे सिंहे किञ्जल्के केसरोऽस्त्रियाम् ॥

---

१ कर्पू, इति मा. ।
२ स्य, इति मा. ।
३ शोद्रोणौ, इति मा. ।
४ वान, इति मा. ।
५ जग, इति मा. ।
६ कुदारुद्रुमकाशयोः, इति मा. ।
७ थुने, इति मा. ।
८ म्बले, इति मा. ।

केसरं हिङ्गुनि क्लीबं पुंसि स्यान्नागकेसरे।
सिंहच्छटायां पुन्नागे बकुले च निगद्यते॥
केदारस्तु शिवे क्षेत्रेऽद्रौ भूभेदालवालयोः।
केनारः कुम्भिनरके[1] शिरःकपालसन्धिषु॥
केकरस्तु भवेत्खोडे [2]कोटिरस्तु बिडौजसि।
[3]कोटिरो नकुले चापि तथा स्यादिन्द्रगोपके॥
कैर्चरं? मुद्गरे प्राहुः पुंसि शब्दविशारदाः।
कोट्टारो[4] नागरे कूपे पुष्करिण्याश्च पाटके[5]॥
कोटरः कोटरं वृक्षगह्वरे परिकीर्तितम्।
कौमारी मातृकाभेदे कौमारः स्याद्वयोभिदि॥
खदिरो स्याच्छाकभेदे ना चन्द्रे[6] दन्तधावने।
खर्जूरं रूप्यखलयोः खर्जूरः कीटवृक्षयोः॥
खण्डाभ्रमभ्रलेशे स्यात्स्त्रीणां दन्तक्षतान्तरे।
[7]खिङ्खिरस्तु शिवाभेदे खट्वाङ्गे (वारि)बालके॥
खिङ्खिरः फेरवे प्रोक्तः खनित्रमवदारणे।
कथयन्त्यपि शब्दज्ञाः खरारं च खुरप्रके?॥
खेचरः पवने देवे तथैव च पतत्रिणि।
गर्गरो मीनभेदे [8]स्यान्मन्थन्यामथ गह्वरः॥
गुहानिकुञ्जगहनदम्भेषु द्वौ तु गह्वरा।
निम्ने गभीरगम्भीरे गम्भारी स्त्री लतान्तरे॥

१ कुङ्कनके, इति मा.। २ केरिर, इति मा.। ३ कै, इति मा।
४ दारो, इति मा.। ५ ण्यौच्चपाटके, इति मा.।
६ दन्ते, इति मा.। ७ खिन्धि, इति मा.। ८ गर्गरी, इत्यादिः।

समष्ठिलायां[1] गण्डीरो गान्धारो देशभिद्यपि ।
गान्धारः पुंसि सिन्दूरे स्वररागप्रभेदयोः ॥
गायत्री [2]त्रिपदादेवीच्छन्दोभित्खदिरेषु च ।
गोपुरं तु पुरद्वारि द्वारमात्रेऽपि शस्यते ॥
कैवर्तीमुस्तयोश्चापि गौधेरो गोधिकाऽऽत्मजे ।
गौधारश्चापि तत्रैव घर्घरस्तु [3]नदान्तरे ॥
घर्घरश्चञ्चलद्वारि ध्वनौ घूकेऽपि कथ्यते ।
श्रीरुद्रवाद्यवीणाया[4] भेदे वस्त्रान्तरेऽपि च ॥
घर्घरी पात्रभेदे स्याद्घस्मरो बहुभक्षके ।
चमरं चामरे क्लीबं मञ्जरीमृगयोः स्त्रियाम् ॥
[5]चन्दिरस्तु गजे सोमे चत्वरं स्थण्डिलेऽङ्गणे ।
चङ्कुरस्तु रथे वृक्षे चमूरुस्तु मृगान्तरे ॥
चतुरश्चातुरे विज्ञे चकोरः स्यात्खगान्तरे ।
चातुरश्चाटुकारे स्यान्नियन्तर्यक्षिगोचरे ॥
स्त्रियां दाक्ष्ये चातुरी स्याच्चाङ्गेरी त्वम्लिकौषधि ।
चिकुरो मूर्धजे प्रोक्तः पिकवृक्षभिदोरपि ॥
गृहबभ्रौ[6] च तरलागयोरपि सरीसृपे[7] ।
चीत्कारः करिघोषे[8] स्याच्चीवरं[9] वल्कले मतम्[10] ॥

---

१ कायामिति मा. ।　२ द्रु, इति मा. ।　३ नगा, इति मा. ।
४ स्त्री त्रुद्रवाद्यवीणाया इति परे ।　५ छद्म, इति मा. ।
६ ग्रहवचौ, इति मा. ।　७ पि, इति मा. ।　८ ह्याते, इति मा. ।
९ परमिति मा. ।　१० ष्विडः, इति मा. ।

[1]छिदिरः पावके रज्जौ करवाले परश्वधे ।
छिदुरश्छेदनद्रव्ये धूर्ते वैरिणि च त्रिषु ॥
जठरो न स्त्रियां कुक्षौ [2]वृद्धकर्कटयोस्त्रिषु ।
जर्जरस्तु जराजीर्णे स्याच्छक्रध्वजशैवले ॥
जम्बीरः[3] स्याद्दन्तशठे प्रस्थपुष्पद्रुमेऽपि च ।
जलेन्द्रो वरुणे चाथ जम्बाले[4] च महोदधौ ॥
जित्वरो जयभाजि स्यात्झर्झरस्तु कलौ युगे ।
नदान्तरे वाद्यभाण्डे बालचक्रे तु झल्लरी ॥
झल्लरी[5] चापि गदिता [6]वाद्यभेदे स्त्रियामपि ।
टट्टरी तु मृषावादे लम्पापटहवाद्ययोः ॥
टङ्कारो विस्मयेऽपि स्यात्प्रसिद्धौ सिञ्जिनीरवे ।
टगरष्ट(ङ्क)णक्षारे हेलाविभ्रमगोचरे ॥
नान्यवल्केकराक्षे स्याड्डिङ्गरः क्षेपणेऽप्यथ ।
डङ्गरं फलभेदे स्याड्डमरुर्वाद्यभिद्यपि ॥
डामरो [7]डिम्बभेदेऽपि सिन्धुफेने तु डिण्डिरः[8] ।
तमिस्रं तिमिरे कोपे[9] तमोयुक्तनिशि स्त्रियाम् ॥
[10]त्वक्पची स्त्री तु कारव्यां त्वक्पचं स्याद्वराङ्गके ।
तगरस्तरुभेदे स्यात्तर्वारस्तु भवेदसौ ॥

---

१ च्चि, इति मा. । २ बद्धकष्ट, इति मा. । ३ उष्णीरः, इति मा. ।
४ म्बूके, इति मा. । ५ झरी, इति मा. । ६ नाद्य, इति मा. ।
७ ग्रन्थ, इति मा. । ८ अयं दीर्घमध्योऽपि ।
९ घोये, इति मा. । १० तव्य, इति मा. ।

चसरः स्वचवेष्टेऽपि च्यङ्कुरी कोललस्यपि ? ।
कथितो ना [1]तित्तिरवत्तित्तिरिः पक्षिभिद्यपि ॥
तिमिरं स्यादन्धकारे नेत्ररोगे तथेष्यते ।
तीवरोऽम्बुनिधौ व्याधे[2] तूणीरः शरसम्पुटे ॥
तूवरोऽश्मश्रुपुरुषे [3]कषायेऽशृङ्गवद्वृषे ।
तुम्बुरुस्तु सुरर्षौ स्यात्तुम्बुरी कुक्कुरस्त्रियाम् ॥
तुषारोऽम्बुकणे चाद्रौ प्रालेये क्लीबमीरितम् ।
तुतुरी[4] वृक्षभेदे स्यादाढक्यां तुवरी मता ॥
तुन्दिरस्तुन्दिलनरि तैत्तिरं तित्तिरव्रजे ।
तोमरस्त्वायुध[5]भिदि दरिद्रो भाग्यवर्जिते ॥
दहरो मूषिकायां च स्वल्पे भ्रातरि बालके ।
दन्तुरस्तून्नतरदे तथोन्नतानते[6] त्रिषु ॥
दर्दरः पर्वते प्रोक्तस्त्रिष्वौषद्भग्नभाजने ।
दर्दुरस्तोयदे भेके[7] वाद्यभाण्डाद्रिभेदयोः ॥
दर्दुरा[8] चण्डिकायां स्याद्ग्रामजाले नपुंसकम् ।
दण्डारो वहने[9] मत्तवारणे शरयन्त्रके ॥
कुम्भकारस्य चक्रे च द्वापरः संशये युगे ।
[10]दासेरश्चेटिकाऽपत्ये तथैव स्यात्क्रमेलके ॥

---

१ तितिदिरि, इति मा. ।
२ व्याधाम्बुनिध्योः, इति मा. ।
३ बक्कदे, इति मा. ।
४ ततुरो, इति मा. ।
५ श्वायाध, इति मा. ।
६ न्नतौन्नते, इति मा. ।
७ दर्दुरः पर्वते पुंसि, इति मा. ।
८ री, इति मा. ।
९ बहले, इति मा. ।
१० टासेरश्चेट, इति मा. ।

दिग्धरः स्यात्तु दिक्पाले दिक्चरस्तु प्रवासिनि ।
स्त्रियां तु दिक्चरी[1] सद्भिर्दिक्चरं तु प्रवासिनि ॥

द्विपारिस्तु मृगेन्द्रे दीनारो हेममाने स्यात् ।
दुरतिः स्यादनिवार्ये[2] भरणानर्हे तु दुर्भरो गदितः ॥

- - - - - - - - - - - - - - - - - - ।
देवारिर्दितितनये दैत्यारिर्निर्जराच्युतयोः ॥

धरित्री तु धरण्यां स्त्री धत्तूरी[3] मातुलद्रुमे ।
ध्वान्तारिस्तु मतः सूर्ये धिक्कारो न्यक्कृतौ श्रुतः ॥

धीवरो व्याधविदुषोर्धूर्धरस्त्वग्रगे नरि ।
धूसरी किन्नरीभेदे ना खरे पाण्डुरे त्रिषु ॥

नर्मरा तु दरीभस्त्रासरलानिष्फलासु च ।
नर्मरा निष्फलायां स्यान्नमेरुर्वृक्षभिद्यपि ॥

नरेन्द्रः स्यान्महीपाले विषवैद्ये निगद्यते ।
नखक्षते तु नखरो न्यक्कारो धिक्कृतौ मतः ॥

नगरी नगरे पुर्यामनित्ये नश्वरं मतम् ।
नागरं मुस्तके शुण्ठ्यां नागरो नगरस्थिते ॥

नागरो जातिभेदेऽपि विदग्धेऽपि च तादृशः ।
निस्तारः[4] स्यान्निस्तरणे निर्हारोऽभ्यवकर्षणे ॥

निर्जरस्त्रिदशे प्रोक्तो जराशून्येऽपि वाच्यवत् ।
निर्वरो निर्भये सारे निर्वरं विगतत्रपे ॥

---

१ निगदिता, इति मा. । २ दुरतिस्त्वनिवार्ये, इति मा. ।
३ री, इति मा. । ४ निःसारः, इति मा. ।

निष्ठुरं च दृढे ग्राम्ये तालपर्ण्यां तु निर्जरा ।
निःसारः सारशून्ये स्यान्निगरो गरणे मतः ॥

[1]निकरो निवहे सारे न्यायदेयधने निधौ ।
निकारः स्यात्परिभवे धान्यस्योत्क्षेपणेऽपि च ॥

नीवरः स्याद्वाणिजके वास्तव्येऽपि तथा मतः ।
निरभ्रं त्वभ्रशून्ये खे नीशारः स्यात्तथाऽऽवृतौ ॥

नूपुरः पादकटके त्वस्त्रियां परिकीर्तितः ।
प्रवरं सन्ततौ गोत्रे स्याच्छ्रेष्ठे वाच्यलिङ्गकम् ॥

प्रखरोऽश्वस्य सन्नाहे कुक्कुरेऽश्वतरेऽपि च ।
पवित्रं तु कुशे ताम्रे मेध्ये पयसि [2]वर्षणे ॥

प्रदरो रोगभेदे स्याद्विदारे [3]शरभङ्गयोः ।
प्रकरः स्यात्पुमान्सङ्घे [4]पुष्पादौ तु नपुंसकम् ॥

जोङ्गके प्रकरं प्रोक्तं प्रकरी चत्वरावनौ ।
संहतौ चोपकृत्यायां ? यथासङ्ख्यमवस्थितौ ॥

पङ्कारः शैवले[5] सेतौ सोपाने जलकुब्जके ।
प्रस्तरो ग्राव्णि च मणौ दर्भमुष्टावपि क्वचित् ॥

यजमानेऽपि गदितः प्रकारस्तुल्यभेदयोः ।
प्रत्यग्रः स्यादभिनवे प्रतीरं तु नदीतटे ॥

---

१ निकारः स्यात्परिभवे निकरो निवहे तथा ।
धान्यस्योत्क्षेपणेऽपि स्यात्तथा परिभवे मतः, इति मा. ।

२ ध, इति मा. ।

३ ना, इति मा. ।

४ विकीर्णे, इत्यस्यादिः ।

५ प्रबले, इति मा. ।

प्रहरः कालमाने स्यात्पतत्रं पक्षपत्रयोः ।
प्रचुरं बहुले क्लीबं पतत्री तरुपक्षिणोः ॥
प्रहारस्तु (भवेद्वेगे?) प्रहारप्रसरौ समौ ।
परारुस्तु पटोले स्यादिति शाब्दिकसम्मतम् ॥
प्रसारस्तु विसारे स्यात्प्रवीरः श्रेष्ठवाचकः ।
पदारः पादधूलौ[1] स्यात्पादालिन्दे च पुंस्यपि[2] ॥
पार्परो[3] भक्तसिक्थे स्यात्कीनाशे राजयक्ष्मणि ।
जराटेऽपि कदम्बस्य केसरे च गदान्तरे ॥
पाटीरो मूलके वङ्गे वार्तिके ततउन्यपि ।
धाराधरेऽपि केदारे [4]वेणुसारेऽपि चेष्यति ॥
पाण्डुरः स्यान्मरुबके वर्णे ना त्रिषु तद्वति ।
प्रान्तरं विपिने दूरशून्यमार्गे च कोटरे ॥
प्राकारो वरणे प्रोक्तः पामरो नीचमूर्खयोः ।
प्रावारश्चोत्तरासङ्गेऽप्युखायां पिठरो मतः ॥
तथा क्लीबेऽपि निर्दिष्टं [5]मुस्तामन्थानदण्डयोः ।
पिञ्जरोऽश्वान्तरे प्रोक्तः क्लीबं स्वर्णे च पीतके ॥
पिण्डारः क्षपणे गोपे महिषीरक्षके द्रुमे ।
पीवरः कच्छपे स्थूले [6]युवत्यां पीवरी मता ॥
पुष्करं करिहस्ताग्रे पङ्कजे व्योम्नि वारुणौ[7] ।
पुमान्योगविशेषेऽपि तथा क्षेत्रे नपुंसकम् ॥

---

१ मूलौ, इति मा. । २ बिन्दुषु, इति मा. ।
३ वीरो, इति मा. । ४ रे, इति मा. । ५ मुस्तामाप, इति मा. ।
६ स्थाल्यां तु पिठरं मतम्, इति मा. । ७ यसि इति मा. ।

औषधद्वीपविहगेष्वपि रागोरगान्तरे ।
तूर्यवक्त्रे च काण्डे च तथा खड्गफलेऽपि च ॥
पैठरमुष्णमांसे स्याद्बर्करस्तरुणे पशौ ।
बन्धुरं मुकुटे पुंसि विडङ्गतैलकल्कयोः ॥
बन्धूके बधिरे हंसे तथा स्याद्रम्यनम्रयोः ।
बन्धुरं स्यात्प्रविश्लेषे न द्वयोर्विकले त्रिषु ॥
बन्धूरा पण्ययोषायां स्त्रियां पुंभूम्नि सक्तुषु ।
बर्बरः स्याद्देशजात्योर्बर्बरो वृक्षभिद्यपि ॥
बर्बरः पामरे केशविन्यासे, शाकपुष्पयोः ।
बर्बरा फञ्जिकायां च [१]बठरः शठवस्त्रयोः ॥
बण्ठरः[२] स्थगिकारज्जौ वकोटे[३] परिकीर्तितः ।
बदरा गृष्टिकार्पास्योरेलापर्ण्यां स्त्रियां पुमान् ॥
कार्पासस्यास्थि बदरी कोलौ क्लीबं तु तत्फले ।
बदरा विष्णुक्रान्तायामिति विश्वेन भाषिता ॥
बदरी कोलवृक्षे स्याद्बधिरः श्रोत्रवर्जिते ।
बादरं बार्बरञ्चोभे तत्तत्सम्बन्धसंयुते ॥
भ्रमरः कामुके भृङ्गे [४]भवित्रं भावि वस्तुनि ।
भटित्रं शूल्यमांसे स्याद्भटित्रं भर्जिते फले ॥

---

१ किर्मीरे बर्बुरोऽन्यवत् । वर्बुरा कृष्णावृन्तायां बर्बुरं कनके जले । बर्बुरं मुस्तमन्थानदण्डयोः पठरः पाठे । इति मा. । अत्र बर्बुरस्थाने कर्बुर इति युज्यते स च प्रागतः ।

२ बण्ठे च, इति मा. । ३ कडे च, इति मा. । ४ प, इति मा. ।

भण्डीरो योड्डवल्ल्योश्च[1] भाण्डीरो वटभिद्यपि ।
भाण्डीरं [2]वनभेदेऽपि भ्रामरं मधुभिद्यपि ॥
पुंसि प्रस्तरभेदे च भास्करोऽग्नौ प्रभाकरे ।
भार्यारुः स्याच्छैलभेदे मृगभेदे च तत्र च ॥
क्रीडया परभार्यायां पुत्रो [3]येनोपपादितः ।
भूदारः [4]सूकरे चापि भूस्फोटे च निगद्यते ॥
भृङ्गारी झिल्लिकायां च भृङ्गारो जलभाजने ।
मेदुरस्तु भवेत्स्निग्धे महीध्रो धरणीधरे ॥
मधुरा शतपुष्पायां [5]मिश्रेयानगरीभिदोः ।
मधुकुक्कुटिकामेदामधुलीयष्टिकासु च ॥
क्लीबं विषे रसे पुंसि तद्वत्स्वादुप्रियेऽन्यवत् ।
मकुरस्तु[6] विनिर्दिष्टो दर्पणे [7]बकुलद्रुमे ॥
कुलालदण्डे मकुरो मुकुरोऽपि च विश्रुतः ।
मन्दरो मन्थशैले स्यात्तथा मन्दारपादपे ॥
वाच्यवद्बहले मन्दे मन्दारस्तु सुरद्रुमे ।
[8]पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः[9] ॥
मन्दिरं नगरेऽगारे मन्दिरो मकरालये ।
मन्थरः कोशफलयोः बाधमन्थानयोः पुमान् ॥
कुसुम्भ्यां नद्योर्मल्ले ? पृथौ [10]वक्रेऽभिधेयवत् ।
मन्थरः सूचके मन्दे पृथावपि तु वाच्यवत् ॥

---

१ योजनं वल्ल्यां, इति मा. । २ बल, इति मा. ।
३ योतो, इति मा. । ४ स्त, इति मा. ।
५ भिस्त्रे, इति मा. । ६ धुरस्तु, इति मा. । ७ च, इति मा. ।
८ वा, इति मा. । ९ मूर्त्तयोः । १० च, इति मा. ।

मकरो राशिभेदे स्यान्निधावपि च [1]यादसि।
मन्दुरा[2] वाजिशालायां शयनीयार्थवस्तुनि॥
मसूरा[3] मसुरा च स्याद्व्रीहिवेश्याप्रभेदयोः।
मसूरो मसुरश्च द्वावेतौ चापि तयोर्मतौ॥
मर्मरः [4]स्याद्वस्त्रभेदे शुष्कपर्णध्वनावपि।
पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि॥
मञ्जरी तिलकस्थूलमुक्तयोः वल्लरौ[5] द्वयोः।
मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोरपि॥
असह्यपरसम्पत्तौ कृपणे चाभिधेयवत्।
अथ स्यान्मद्गुरो मत्स्ये मयूरोऽपि च केकिनि॥
माथुरो देशभेदे स्यान्मधुरे[6] माधुरी स्त्रियाम्।
माठरः स्यात्कुलालस्य दण्डेऽर्कपारिपार्श्विके॥
व्यासेऽपि चाथ खट्टाशे मार्जारः स्याद्बिडालके।
मायूरं क्षेत्रभेदे स्यान्मयूरस्य समूहके[7]॥
मायूरः स्यात्तु लकुचे मिहिरः सूर्यवृद्धयोः[8]।
मुद्गरं[9] मल्लिकाभेदे तथा [10]लोष्टादिभेदने॥
मुदिरः कामुके मेघे मुहिरः[11] काममूर्खयोः।
मुर्मुरस्तुषवह्नौ स्यान्मन्मथे रविवाजिनि॥

---

१ वा, इति मा.। २ गडूरा, इति मा.। ३ स्तरा, इति मा.।
४ स्याद, इति मा.। ५ बच्छरी, इति मा.।
६ ये, इति मा.। ७ सपूजिता, इति मा.।
८ बुद्धयोरिति मा.। ९ कुरमिति मा.।
१० वो, इति मा.। ११ दुरः, इति मा.।

मुनीन्द्रस्तु मतो बुद्धे मृगारिर्व्याघ्रसिंहयोः ।
मेदुरं बहुले प्रोक्तं मल्ल्यां स्यान्मोगरः पुमान् ॥

रुधिरं कुङ्कुमे रक्ते रुधिरोऽङ्गारके पुमान् ।
मनोहरे तु रुचिरं लविचं छेदसाधने ॥

वल्लरः शाद्वले प्रोक्तो [1]निर्झरस्थानकुञ्जयोः ।
बिल्वक्षेत्रे च मञ्जर्यां वल्लरीति प्रचक्षते ॥

वल्लुरं स्याद्वनक्षेत्रे गहनोषरयोरपि[2] ।
वल्लूरं शुष्कमांसे च तथा मांसे च दंष्ट्रिणः[3] ॥

वन्दिरोऽनेकपे चन्द्रे वन्दारुरभिवादके ।
वर्करः परिहासे स्याद्वर्वरः[4] पामरेऽपि च ॥

वर्वरश्च मतः केशचक्कले नीवृदन्तरे[5] ।
फञ्जिकायां पुमाञ्छाकभेदपुष्पभिदोः स्त्रियाम् ॥

वटरः कुक्कुटे वस्त्रे[6] शठे च वशिरः पुमान् ।
किणिहीहस्तिपिप्पल्योः क्लीवेऽब्धिलवणे स्मृतः ॥

वत्सरो हायनेऽपि स्याद्वशिरः सशठे मतः ।
वन्दनं गहनेऽरण्ये वभ्रो भ्रमरे मतः ! ॥

वरचा तु भवेत्कक्षा केकरे[7] वलिरो मतः ।
वार्द्दरः क्रिमिजातेऽम्बुदक्षिणावर्त्तशङ्खयोः ॥

---

१ निर्जन, इति मा. । २ वाहनव्यययोरपि, इति मा. ।
३ (?) कूरमीनयोः, इति मा. । ४ र्छरः, इति मा. ।
५ नेमिवृदन्तरे, इति मा. । ६ वंशे, इति मा. ।
७ वोढे तु, इति मा. ।

वागरः[1] स्याद्गतातङ्के मुमुक्षौ वातवेष्टके[2] ।
विशारदे विशाणेऽपि [3]निर्णये वारकेऽपि च ॥
वागुरा मृगबन्धिन्यां वानरस्तु मतः कपौ ।
वानीरो वृक्षभेदेऽपि व्याहारो लपिते मतः ॥
वासुरा [4]वासितारात्र्योर्वासरो[5] दिननागयोः ।
वानरी तु लताभेदे तथा वानरयोषिति ॥
वातारिः स्यादुरुवुके वामोरुस्तु मता स्त्रियाम् ।
वाशिरं[6] लवणे प्रोक्तं विकारो विकृतौ रुजि ॥
विष्टरः कुशमुष्टौ स्यात्पादपे चासनेऽपि च ।
विस्तरो वाक्प्रपञ्चे स्याद्विस्तारे प्रणयेऽपि च ॥
विदुरो नागरे धीरे कौरवाणां च मन्त्रिणि ।
विदारी शालिपर्ण्यां स्याद्रोगभेदेक्षुगन्धयोः ॥
परिक्रमे विहारः स्याद्भ्रमणे सुगतालये ।
विस्फारस्तु धनुःशब्दे विसरः प्रसरे व्रजे[7] ॥
विवरं दूषणे गर्ते विदूरो दूरदेशगे ।
विचारो व्योममार्गे स्याद्विचारः कार्यनिश्चये ॥
विस्तारस्तु मतो व्यासे विड्वरः स्यात्तु सूकरे ।
विधुरं स्यात्प्रविश्लेषे विकले[8] मृतयोषिति ॥
विकिरः स्यात्पिण्डभेदे विष्किरोऽपि पतत्त्रिणि ।
विशारदे सप्रतिभे वैधात्रो ब्रह्मणः सुते ॥

१ गुरः, इति मा. ।
२ चामये बले, इति मा. ।
३ नगरे वाचके, इति मा. ।
४ वासु, इति मा. ।
५ सुरो, इति मा. ।
६ वशिरमेव वाशिरं, प्रज्ञाद्यण् ।
७ ध्वजे, इति मा. ।
८ अन्यवदिति शेषः ।

शबरः स्यान्म्लेच्छदेशजात्योश्च सलिले शिवे ।
शबरी तु स्त्रियां देव्यां शम्बरं सलिले मतम् ॥
शम्बरी चाखुपर्ण्यां स्याच्छम्बरो मृगदैत्ययोः ।
शक्वरी छन्दसोभेदे नदीमेखलयोरपि ॥
शफरी तु द्वयोर्मीने शर्वरी यामिनीस्त्रियोः ।
शर्करा चेक्षुविकृतावुपलाकर्परांशयोः ॥
रुग्भेदे शकलेऽपि स्याच्छङ्करश्चन्द्रशेखरे ।
श्वशुरस्तु मतः पूज्ये तथा स्यात्स्त्रीपितर्यपि ॥
शतद्रुस्तु नदीभेदे श्वदंष्ट्रागोक्षुरेऽपि च ।
शरारिराटौ क्लीबे तु शरीरं [1]वर्ष्मणि स्थितम् ॥
अल्पशम्यां शमीरः स्याच्छणीरं[2] तु सुभिक्षके ।
शाबरी शूकशिम्ब्यां स्यात्पुंसि पापापराधयोः ॥
लोध्रे च शाङ्करी[3] पुंसि कार्तिकेये गणाधिपे ।
शालूरः[4] पद्मकन्दे स्याद्दुग्धफेने तु शार्करः ॥
शर्करान्वितदेशेऽपि तद्युतेऽन्ने नपुंसकम् ।
[5]शाङ्करस्तु बलीवर्दे छन्दोभेदे नपुंसकम् ॥
शार्वरं स्यादन्धकारे शारीरं देहजे वृषे ।
शार्वरं रात्रिसम्बद्धे[6] घातुके भेद्यलिङ्गकम् ॥
शिखरोऽस्त्री द्रुमाग्रे चाद्रिशृङ्गपुलकाग्रयोः ।
पक्वदाडिमबीजाभमाणिक्ये शिखरं मतम् ॥

---

१ ष्म, इति मा. ।
२ शाणीरः, इति मा. ।
३ शङ्करे, इति मा. ।
४ अत्रार्थेऽन्यत्र शालूकशब्दः ।
५ शार्क, इति मा. ।
६ स्यादन्धकारे, इति मा. ।

शिखरी स्यादपामार्गे शैलपादपयोः पुमान् ।
शिशिरस्तु ऋतौ देशे जडे तु स्यात्त्रिलिङ्गकः ॥
शिलीन्ध्रं कदलीपुष्पे कवके ना झषान्तरे ।
त्रिपुटे, स्त्री तु विहगीभेदे गण्डूपदीमृदोः ॥
शीकरं शरले वातसृताम्बु[1]कणयोः पुमान् ।
शिबिरं[2] सैन्यवसतौ शितद्रुस्तु नदीभिदि ॥
वंशादिवाद्ये शुषिरं विवरेऽपि नपुंसकम् ।
शुषिरो न स्त्रियामाखौ[3] वह्नौ रन्ध्रान्विते त्रिषु ॥
शृङ्गारः सुरते नाट्यरसे च गजमण्डने[4] ।
शृङ्गारं चूर्णसिन्दूरे लवङ्गकुसुमेऽपि च ॥
शृङ्गारी पूगगजयोः सशृङ्गारसुवेषयोः ।
संस्कारः प्रतियत्नेऽनुभवसङ्कल्पयोरपि ॥
संस्तरः प्रस्तरे यज्ञे सङ्गरो युधि चापदि ।
शमीफले क्रियाकारे विषाङ्गीकारयोस्तथा ॥
सम्भारः सम्भृतौ सङ्घे सगरो राजभिद्यपि ।
सङ्करोऽवकरे चापि सङ्कीर्णे[5]ऽपि निगद्यते ॥
समरः संयुगे चाथ सन्तापे सञ्ज्वरो मतः ।
समीरः स्यात्तु पवने समुद्रस्तु सरित्पतौ ॥
सत्वरस्त्वरया युक्ते समग्रं बहुलेऽन्यवत् ।
संहारः स्याच्च संवर्ते स्थविरः स्याज्जरायुजि ॥

---

१ जाम्बु, इति मा. । २ खरं, इति मा. ।
३ गर्त्ते, इति मा. । ४ ले, इति मा. ।
५ सङ्कर्षे, इति मा. ।

संवरो[1] मृगभेदे स्यात्सागरश्च सरित्पतौ[2]।
स्थाविरं वार्धके प्रोक्तं[3] सामुद्रं देहलक्षणे॥
समुद्रजेऽन्यलिङ्गं स्यात्साविचः शङ्करे[4] वसौ।
यमे शनैश्चरे चापि साविची ब्रह्मयोषिति॥
साविची सत्यवत्पत्न्यां [5]चिपदायामपीष्यते।
सान्तरं दूरशून्योः स्यात्सादरश्चादरान्विते॥
साकारो गुणवन्मूर्तौ चिलिङ्गः समुदीरितः।
सिन्दूरो [6]दैत्यभेदे स्यात्सिन्दूरं रक्तचूर्णके॥
सिन्दूरी रोचनारक्तचेलिकाधातकीष्वपि।
सिताभ्रः स्यात्तु कर्पूरे सुन्दरं तु मनोहरे॥
शुनारस्तु शुनीस्तन्ये [7]सर्पाण्डकलविङ्कयोः।
सुन्दरी [8]तरुभिन्नारीदेवताभिद्यपीष्यते॥
सुमेरुः स्याद्रत्नसानौ सुहोचो मुनिभिद्यपि।
सुषिरं विवरे चापि पातालेऽपि नपुंसकम्॥
सुषिरा विद्रुमलता सूकरः स्यात्तु पोचिणि[9]।
सैरन्ध्री परवेश्मस्थशिल्पकृत्स्ववशस्त्रियाम्॥
वर्णसङ्करसम्भूतस्त्रीमहल्लिकयोरपि।
सौवीरं काञ्जीके [10]स्रोतोऽञ्जने च बदरीफले॥
लवणे चापि देशे तु सौवीरो गदितः क्वचित्।
हारिद्रं हेम्नि वृक्षे ना पक्षिभेदेऽप्यथ चिषु॥

---

१ सामरो, इति मा.। २ जागरः सरितां पतौ, इति मा.।
३ जरसा प्रोक्ते, इति मा.। ४ स्वरे, इति मा.।
५ द, इति मा.। ६ तरुभेदे, इतिपरे। ७ सपिण्ड, इति मा.।
८ तनु, इति मा.। ९ योषिति, इति मा.। १० स्रोन्तो, इति मा.।

हरिद्रा रञ्जितेऽपि स्याद्धिमाद्रिस्तु सुरालये।
हिण्डीरो[1] दाडिमेऽपि स्यात् (फेनवार्ताकुपुरुषे) ॥

॥ इति रत्तीयम् ॥

---

॥ अथ रचतुर्थम् ॥

अरुष्करो व्रणकृति त्रिषु भल्लातके पुमान्।
अभिमरो वधे युद्धे तथा [2]स्वबलसाध्वसोः ॥
अलङ्कारस्त्वपमादौ हारकेयूरकादिषु।
अवतारोऽवतरणे पुष्करिण्यादितीर्थयोः ॥
अनुत्तरस्त्रिषु श्रेष्ठे प्रतिजल्पासमर्थके।
अवस्करस्तु वर्चस्के गुह्योऽथावसरः पुमान् ॥
प्रस्तावे मन्त्रभेदे च वर्षणे चापि कीर्तितः।
उपलादावकूपारः कूर्मराजे महोदधौ ॥
असिपत्रस्तु निरये कोषकारे च कीर्त्यते।
अश्वतरो वेगसरे कर्कोटे पन्नगान्तरे ॥
अभिहारोऽभियोगे स्याच्चौर्ये सन्नहनेऽपि च।
अग्निहोत्रः पुमानग्नौ क्लीबं हविषि कर्मणि ॥
अग्निहोत्री त्वाहिताग्नौ पुंसि स्रुचि तु योषिति।
अर्द्धचन्द्रस्तु खण्डेन्दौ मतश्च करजक्षते ॥
गलहस्ते बाणभेदे कृष्णत्रिवृत्ति तु स्त्रियाम्।
दिनरात्रे त्वहोरात्रस्त्वन्धकारस्त्वभास्करे ॥

---

१ हिण्डीरं, इति मा.।  २ स, इति मा.।

अङ्गहारोऽङ्गविक्षेपेऽहिभेदेऽजगरः स्मृतः ।
अभिमाने त्वहङ्कारस्त्वतिमात्रं तु पुष्कले ॥
अङ्गीकारोऽभ्युपगमेऽप्यध्याहारो वितर्कणे ।
अन्तःपुरं राजवेश्मन्यवाच्ये स्यादनक्षरम् ॥
अभ्यन्तरं त्वन्तराले मणिके स्यादलिञ्जरः ।
अग्रेसरः पुरोगे स्यादहङ्कारी त्वहंयुजि ॥
असिपुत्री छुरिकायां त्वचि तु स्यादसृग्धरा ।
अतिचरा पद्मतरावभ्याहारस्त्वभिग्रहे ॥
अपहारश्चापचयेऽवहारः स्यात्तु तस्करे ।
अधश्चरस्तथा चोरे गदितः सुकुमालवत् ? ॥
अश्मसारस्तु लोहे स्यात्सहायेऽभिसरो मतः ।
अतिहारस्तु चौर्ये स्यादपवित्रं तु किल्बिषे ॥
आडम्बरो रथे तूर्ये[१] संरम्भे गजगर्जिते ।
आत्मपुत्रे चात्मवीरः [२]श्यालके च विदूषके ॥
बलवत्यप्यौदरिकेऽप्यात्मम्भरिरितीरितः ।
इन्दिदिरश्चञ्चरीकेऽप्यथ नीलोत्पले मतम् ॥
इन्दीवरं, शतावर्यां भवेदिन्दीवरीति[३] च ।
उपकारस्तूपकृतौ विकीर्णकुसुमादिषु ॥
उपह्वरः[४] समीपे स्यादेकान्ते तु नपुंसकम् ।
उदुम्बरो जन्तुफले ताम्रे तु स्यादुदुम्बरम् ॥

१ स्तूर्ये रथे, इति मा. ।
२ श्या, इति मा. ।
३ वरेति, इति मा. ।
४ अन्यत्र क्लीबे ।

उदुम्बरस्तु देहल्यां कुष्ठभेदे च षण्डके ।
उद्दन्तुरस्त्रिषूत्तुङ्गे करालोत्कटदन्तयोः ॥
उपहारस्तूपदायां [1]वेषवार उपस्करः ।
उदाहार उपोद्घाते तूष्णसारस्तु हि तरौ ॥
औदुम्बरो यमे रोगभेदेऽपि च निगद्यते ।
बुसे कडङ्गरः प्रोक्तः कर्णधारस्तु नाविके ॥
अथ कर्मकरो भृत्ये वेतनाजीविनि त्रिषु ।
कीनाशे पुंसि मूर्वायां[2] बिम्बिकायामपि स्त्रियाम् ॥
करवीरः कृपाणे स्याद्दैत्यभेदाश्वमारयोः ।
करवीर्यदितिश्रेष्ठगवीपुत्रवतीष्वपि ॥
कटम्भरा प्रसारिण्यां रोहिण्यां गजयोषिति ।
कलम्बिकायां गोलायां[3] वर्षाभूमूर्वयोरपि ॥
कलिकारस्तु धूम्याटे करञ्जे पीतमुस्तके ।
कर्णिकारस्तु शम्याके तथैव च द्रुमोत्पले ॥
कर्णपूरोऽवतंसे स्यान्नीलोत्पलशिरीषयोः ।
कटुम्भरा कटुक्यां स्यात्कर्मशूरस्तु कर्मठे ॥
कादम्बरस्तु दध्यग्रे [4]मद्यभेदे नपुंसकम् ।
स्त्री वारुणीपरभृताभारतीसारिकासु च ॥
कालिञ्जरो योगिचक्रे मेलके भैरवे गिरौ ।
कारोत्तरः सुरामण्डे हेम्नि कार्त्तस्वरं मतम् ॥

---

१ प्रजने स्याद्दु, इति मा. । २ वर्षाभी, इति मा. ।
३ धायामिति मा. । ४ मेघ, इति मा. ।

कामचारः कामुके स्यात्स्वच्छन्दे निरवग्रहे[1] ।
कुम्भकारी कुलथ्यां स्यात्पुमांस्तु घटकारके ॥
कुक्षिम्भरस्त्वौदरिके कुस्तुम्ब(रु) तु धान्यके ।
कृष्णसारा शिंशपायां स्नुह्यां पुंसि मृगान्तरे ॥
कोविदारो वृक्षभेदे कौ(ल)टेरोऽसतीसुते[2] ।
गिरिसारः पुमाँल्लोहे वङ्गे[3] मलयपर्वते ॥
गुडदारुर्मधुतृणे गदितः शब्दवेदिभिः ।
खगेश्वरस्तु गरुडे सहस्रकिरणेऽपि च ॥
घनसारस्तु कर्पूरे दक्षिणावर्त्तपारदे ।
चराचरं जङ्गमे स्यादिङ्गविष्टपयोरपि[4] ॥
चर्मकारः पादूकृति स्त्रियां चर्म(क)षौषधौ ।
अथ चक्रधरोऽजेऽहौ ना त्रिषु ग्रामजालिनि ॥
चित्राटीरो विधौ भालमङ्कितं येन तत्र च ।
घण्टाकर्णोपहाराय हृतच्छागास्रबिन्दुषु ॥
चाटकैरस्तु चटकाऽपत्ये पुंसि निगद्यते ।
चित्राटिरो विधौ रङ्गाजीवे चित्रकरः स्मृतः ॥
चार्वटीरस्तु गणिकाऽत्मजे चाथ नपुंसकम् ।
हेम्नि छुच्छुन्दरी[5] योषा गन्धमुख्यामुदीरिता ॥
मीनादौ स्याज्जलचरो मेघे जलधरो मतः ।
जगत्करो धातरि स्याद्दृद्धे तु स्याज्जरातुरः ॥

---

१ कलविङ्कयोरिति मा. । २ पुंश्चलीसुते, इति मा. ।
३ रङ्गे, इति मा. । ४ त्रिषु, इति प्रेषः ।
५ चुचुन्दरी, इति मा. ।

जटाधरः स्मरहरे दैत्यभेदे जलन्धरः ।
जलेश्वरस्तु वरुणे स्याद्राजनि जनेश्वरः ॥
तरवारो मतः खड्गे त्वक्क्षीरी वंशलोचना[1] ।
ताडपत्रं तु ताटङ्के रण्डायां तालपत्र्यपि ॥
तुङ्गभद्रा नदीभेदे स्त्रियां पुंसि मदोत्कटे ।
तुण्डकेरी च कार्पास्यां बिम्बिकायामपि स्त्रियाम् ॥
[2]तुलाधारस्तुलाराशौ पुंसि वाणिजके त्रिषु ।
घने तोयधरो[3] मुस्तासुनिषण्णकयोरपि ॥
दधिचारस्तु तक्राटे गदितः शब्दकोविदैः ।
दर्वीकरो दन्दशूके[4] भवेद्दण्डधरः पुनः ॥
प्रेतनाथे महीशे च तथा भैरवभिद्यपि ।
दण्डयात्रा दिग्विजये संयानवरयात्रयोः ॥
दध्योदके दधिसरः दानवारिस्तु केशवे ।
[5]दामोदरश्च तत्रैव [6]दशपुरं तु पत्तने ॥
दिनेश्वरः सवितरि, क्षपणे स्याद्दिगम्बरः ।
नग्ने महेश्वरे, द्यूतकारे तु स्याद्दुरोदरः ॥
द्यूताक्षपणयोश्चापि देहयात्रा तु भोजने ।
प्रेतनाथपुरीयाने पुरीं यो दिवि निर्ममे ॥
द्वैमातुरो गणाधीशे जरासन्धे च गद्यते ।
अथ दैत्यगुरुः शुक्रे दैत्यदारो जनार्दने ॥

---

१ वंशरोचने, इत्यपरे । २ जुला, इति मा ।
३ ज्वरो, इति मा. । ४ दद्रुजके, इति मा. ।
५ दार्मे, इति मा. । ६ दाशा, इति मा. ।

द्रोणक्षीरा द्रोणदुहि गवि, शैले धराधरः ।
धनुर्धरस्तु धानुष्के कुबेरे स्याद्धनेश्वरः ॥
धाराधरो जलधरे कृपणे च निगद्यते ।
धाराङ्कुरस्तु नासीरे शीकरेऽपि घनोपले ॥
धार्तराष्ट्रोऽसिताऽऽस्याङ्घ्रिहंसे कौरवसर्पयोः ।
धुन्धुमारस्त्विन्द्रगोपे गृहधूममहीपयोः ॥
धुरन्धरो धवतरौ वाच्यलिङ्गस्तु धूर्वहे ।
धृतराष्ट्रो राजमात्रे पक्षिराजप्रभेदयोः ॥
नागभेदे च कथितो हंसपत्न्यां तु योषिति ।
नभश्चरो घने विद्याधरे चापि विहङ्गमे ॥
नमस्कारो लताभेदे राजनि स्यान्नरेश्वरः ।
नागोदरमुरस्त्राणे[1] रोमान्त - - - - - ॥
निषद्वरस्तु जम्बाले सुधांशौ च निशाकरः ।
नीलाम्बरो रौहिणेये राक्षसे च शनैश्वरे ॥
निशाचरो राक्षसे स्यात्फेरौ पेचकसर्पयोः ।
निशाचरी पांसुलायां साङ्गे क्लीबे निरन्तरम् ॥
भवेत्परिकरः सङ्घे पर्यङ्कपरिवारयोः ।
प्रगाढगात्रिकाबन्धे समारम्भविवेकयोः ॥
भवेत्पक्षचरश्चन्द्रे पृथक्चारिगजेऽपि च ।
अथ प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे ॥

---

१ उदरस्त्राणे, इत्यपरे ।

व्रणशुद्धौ [1]चमूपृष्ठे पुंसि न स्त्री तु मण्डने ।
आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः ॥
परम्परः प्रपौत्रादौ मृगभेदेऽपि कथ्यते ।
परम्परा परिपाट्यां सन्तानेऽपि वधे क्वचित् ॥
मयाऽस्योपकृतं पूर्वमयं चोपकरिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥
पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वे च पुष्पितः ।
पयोधरो नालिकेरे कोशकारे कुचेऽपि च ॥
कसेरुमेघयोः पुंसि प्रभाकरोऽग्निसूर्ययोः ।
प्रतिहारो द्वारि तत्स्थे जीर्णवस्त्रे पटच्चरम् ॥
परिष्कारस्त्वा[2]भरणे कामे पञ्चशरः स्मृतः ।
परिवारः परिजने वज्रकोशे परिच्छदे ॥
भवेत्परिसरः प्रान्तभूमौ दैवे तथा मृतौ ।
प्रतीकारो वैरशुद्धौ वरार्थिन्यां पतिम्वरा ॥
पद्माकरस्तडागे प्रतिसीरा जवनिकायां स्यात् ।
परिसर्या[3] परिसारः स्यात्प्रत्याहार उपादाने ॥
परिचरः परिधिस्थे प्रत्यासारो व्यूहपार्ष्णौ च ।
पटच्चरस्तु चौरे पारावारः[4] सरित्पतावुक्तः ॥
निम्बे स्यात्पारिभद्रस्तु चौरे पाटच्चरो मतः ।
पारावारं परार्वाचोस्तीरयो (र्ना सरित्पतौ) ॥

---

१ भूमि, इति मा. । २ धार, इति मा. ।
३ हारे, इति मा. । ४ चारः, इति मा. ।

पाचटीरः समुद्दिष्टो मुक्तव्यसनमन्त्रिणि[१] ।
पीताम्बरस्तु शैलूषे[२] पुंसि कैटभसूदने ॥
पीतसारो मलयजे गोमेदकमणावपि ।
पीतसारं च कनके पीतदारु च चन्दने ॥
पीनोदरं गजमुखे महेन्द्रे स्यात्पुरन्दरः ।
पूर्णपात्रं वस्तुपूर्णपात्रे वर्धापकेऽपि च ॥
फलपूरो वृक्षभेदे[३] बलात्कारो हठात्कृतौ ।
बलभद्रा त्रायमाणाकुमार्योः पुंसि सीरिणि ॥
भयङ्करं प्रतिभये भद्रदारु तु दारुणि ।
भक्षकारः सूपकारे रक्षोभेदे महोदरः ॥
महोदरं व्याधिभेदे महावीरौषधीभिदि ।
महावीरोऽतियजने परपुष्टे[४] जराटके ॥
तार्क्ष्ये कर्के[५] पवौ शूरे सिंहे [६]मखहुताशने ।
महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे ॥
मणिच्छिद्राऽथ [७]मेदायामृषभाख्यौषधावपि ।
मनोहरो भक्ष्यभेदे चित्तहारिणि वाच्यवत् ॥
भ्रमरे स्यान्मधुकरो गिरीशे तु महेश्वरः ।
मधुशिग्रू रक्तशिग्रौ मदोदग्रो मदोत्कटे ॥
अथाभीरस्य योषायां महाशूद्री निगद्यते ।
चित्ताभोगे मनस्कारो मालाकारस्तु मालिके ॥

१ मुक्तव्यापारमन्त्रिणि, इति विश्वः ।    २ त्रिष्विति शेषः ।
३ बीजपूरे, इत्यमरः ।    ४ परितुष्टे, इति मा. ।
५ कर्कोऽत्र धवलाश्वः ।    ६ मु, इति मा. ।    ७ मेधा, इति मा. ।

माहेश्वरी शक्तिभेदे शैवे माहेश्वरस्त्रिषु ।
मितोदरी तु तन्वङ्ग्यां भे स्यान्मृगशिरः क्वचित् ॥
रथकारस्तु माहिष्यात्करणीजे च तक्षणि ।
रागसूत्रं तुलासूत्रे पट्टसूत्रे नपुंसकम् ॥
रात्रिञ्चरो रात्रिचरश्चोभौ स्यातां च रक्षसि ।
लम्बोदरं स्याद्द्गाने[1] गणानामधिपे नरि ॥
लक्ष्मीपुत्रः कामदेवे तथैव च तुरङ्गमे ।
लिपिकारो लेखके स्याद्वरण्यां स्याद्वसुन्धरा ॥
व्यवहारो द्रुभेदे स्यान्न्यायेऽपि च धनेऽपि च ।
वक्रनक्रस्तु पिशुने तथैव शुकपक्षिणि ॥
अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः ।
वटाङ्कुरस्तु नासीरे वटस्य च नवोद्भिदि ॥
वनेचरः किराते स्याद्वत्से वत्सतरो मतः ।
तथा स्त्रियां वत्सतरी षण्डे वर्षधरः स्मृतः ॥
वामाचारः कौ[2] - - - - - - - - - - - ।
- - - - - - - - - - - - - - - - - - ॥
स्कन्दावारस्तु कटके शब्दविद्भिर्निगद्यते ।
सांवत्सरो ज्योतिषिके सिन्दुवारस्तरौ क्वचित् ॥
स्थेयान् स्थिरतरः प्रोक्तः[3] स्थिरदंष्ट्रो भुजङ्गमे ।
वराहाकृतिविष्णौ च सूपकारस्तु पाचके ॥

---

१ द्रूगने, इति मा. ।

२ इतो मातृकायां प्रायः पञ्चदशश्लोकानामनुपलम्भः ।

३ स्थिरतरः स्थेयसि स्यादिति मा. ।

सुचारित्रा तु सत्यां स्यात्सुकुमारं च कोमले।
तथा पुण्ड्राभिधानेक्षौ सुकुमारः [1]सुपुत्रके॥
कल्पवृक्षे सुरतरुः सूत्रधारः शचीपतौ।
[2]नान्द्यनन्तरसञ्चारिपात्रशिल्पि[3]प्रभेदयोः॥
सुनासीरः शचीकान्ते शुनासीरवदीरितः॥

॥ इति रचतुर्थम्॥

---

॥ अथ रपञ्चमम्॥

अगदङ्कारस्तु वैद्येऽभिमतोऽग्रतःसरो भृत्ये।
संसक्तेऽत्वपटान्तरमनवस्करं तु निःशोध्ये॥
उत्पलपत्रं तूत्पलदलयोषानखक्षते गदितम्।
कपिलधारा गदिता स्वर्णद्यां तीर्थभेदेऽपि॥
करशीकरस्तु गदितः शब्दाभिज्ञैर्मदे करिणः।
खरमञ्जरी शिखरिणी मृगनाभौ तु गन्धशेखरं प्राहुः॥
तद्वत्प्रचण्डपण्डैर्धनपे तु गुह्यकेश्वरो गदितः।
चन्द्रशेखरस्तु शम्भौ[4] पुत्रोपस्कर ईरितः सद्भिः॥
रेषणनामकवृक्षे रक्षसि रजनीचरं प्राहुः।
लोहाभिसारमाहुर्नृपतेस्तुरङ्गपूजादौ॥
तमालपत्रतिलके तापिच्छे पत्रके चापि।
इङ्गुद्यां तापसतरुः कौबेरे [5]नलकूबरः प्रोक्तः॥

---

१ सुव्यु, इति मा.।
२ सूनाद्या, इति मा.।
३ सिष्य, इति मा.।
४ शिवे, इति मा.।
५ भल्ल, इति मा.।

नागकेसरस्तरुभिदि प्रतिजागरो[1] - - - - ।
पांशुचामरस्तु दूर्वाञ्चितभूवि गदितश्च तत्त्वज्ञैः ॥
तालीसपत्रं भूम्यामलकीतालीसयोर्गदितम् ।
वर्धापकप्रशंसापूरोटोधूलिगुच्छकेष्वपि च ॥
स्यात्पादचत्वरं छागे सैकते पिप्पलेऽपि च ।
करके परदोषैकप्रवक्तृपुरुषे[2]ऽपि च ॥
पीतकावेरमित्युक्तं पित्तले कुङ्कुमेऽपि च ।
मण्डलेश्वरमप्याहुः पुंसि सामन्तभूमिपे ॥
स्याद्राजबदरं रक्तामलके लवणेऽपि च ।
वस्वौकसारेन्द्रपुरे कुबेरनलिनीपुरोः[3] ॥
विप्रतीसार इत्युक्तः कौकृत्येऽनुशयेऽपि च ।
व्योममुद्गर इत्युक्तो निर्घातेऽनन्यबुद्धिभिः ॥
स्याच्छाखानगरं नाम नगरस्योपकल्पके ।
सनत्कुमार इत्युक्तश्चतुर्मखसुतेऽप्यथ ॥
स्यात्सन्देशहरो दूते कणिशे सस्यमञ्जरी ।
स्यात्सोमवल्लरी सोमलतायां परिकीर्तिता ॥
स्यात्सस्यसंवरो[4] वृक्षे, पौनःपुन्येऽथ कीर्तितः ।
भृशे[5] समभिहारश्च, सर्वतोभद्र इत्ययम् ॥
काव्यचित्रे धामभेदे तथा मण्डलभिद्यपि ।
(नि)म्बे ना सर्वतोभद्रा गम्भार्यां नटयोषिति ॥

॥ इति रपञ्चमम् ॥

---

१ अवेक्षायामित्यमरः । २ षु भाषे, इति मा. । ३ युगे, इति मा. ।
४ स्वरो, इति मा. । ५ श्लोके, इति मा. ।

॥ अथ रषष्ठम् ॥

अङ्गारवल्लरीत्युक्ता मर्कट्यां शब्दवेदिभिः ।
समभिव्याहरो वाक्ये निर्दिष्टो वाक्यकोविदैः ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये रान्तवर्गः ॥

---

॥ अथ लान्तवर्गः ॥

ल इन्द्रे लवणे व्याजे दाने ला परिकीर्तितः ।
ली श्लेषे चपले[1] चापि ग्लौः (कौ) चन्द्रेऽपि गद्यते ॥

---

॥ अथ लद्वितीयम् ॥

अलिः सुरायां भ्रमरेऽप्यलं पूर्त्यर्थमव्ययम् ।
आलुर्गलन्तिकायां स्यादालु कन्दे च भेलके ॥
आलिः सेतौ वयस्यायां पङ्क्तौ च विशदाशये[2] ।
इला सौम्यस्य योषायां भूम्यां[3] च गवि वाचि च ॥
ओल्ल[4]स्तु स्मरणे पुंसि स्यादार्द्रे[5] वाच्यलिङ्गकः ।
कला मूलद्रव्यवृद्धौ शिल्पादावंशमात्रके ॥
चन्द्रस्य षोडशांशे च कला कालमितावपि ।
कलं शुक्रे [6]त्वजीर्णे चाप्यव्यक्तमधुरध्वनौ[7] ॥

---

१ लवे, इति मा. । २ अस्य वाच्यवदिति शेषः ।
३ धात्र्यां, इति मा. । ४ उल्लः, इति मा. । ५ त्ते, इति मा. ।
६ च, इति मा. । ७ अनयोस्त्रिष्विति शेषः ।

कलिः स्त्री कलिकायां ना शराजिकलहे युगे ।
कालो मृत्यौ महाकाले समये यमकृष्णयोः ॥
काला स्यात्कृष्णवृन्तायां निलीमञ्जिष्ठयोरपि ।
काली तूमामातृभिदोः परिवारेऽम्बुदावली ॥
क्षीरकीटे कालिकायां, कीलः स्यादग्नितेजसि ।
कफोणिस्तम्भयोः शङ्कौ कीलाऽऽरतहतावपि ॥
कुलं जनपदे गोत्रे सजातीयगणेऽपि च ।
भवने च तनौ क्लीबं कण्टकार्यौषधौ कुली ॥
अथ कूलं तटे स्तूपे[1] सैन्यपृष्ठतडागयोः ।
कोलः पोत्रिणि कोलं तु फले कोलस्य न द्वयोः ॥
स्त्रियां तु पिप्पलीचव्योः खलः स्यादधमेऽप्यथ ।
खलः कल्के भुवि स्थाने क्रूरे कर्णजपेऽपि च ॥
खल्ला निम्ने [2]वस्त्रभेदे चर्मचातकपक्षिणोः ।
खल्ली तु हस्तपादावमर्दनाह्वयरुज्यपि ॥
गलः कण्ठे सर्जरसे गुलः स्यादैक्षवे पुमान् ।
गुली तु गुटिकारोगभिदोः[3] स्नुह्यां गुला स्मृता ॥
[4]गोला पत्राञ्जने बालखेलने मण्डले[5]ऽपि च ।
कुनटीदुर्गयोर्गोदावरीसख्योरलिञ्जरे ॥
चला[6] लक्ष्म्यां पुमान्कम्पे कम्पयुक्तेऽभिधेयवत् ।
चिल्लः खगे सचुल्लश्च पिल्लवत् क्लिन्नलोचने ॥

१ स्तूर्ये, इति मा. ।
२ पृ, इति मा. ।
३ योगभिदोः, इति मा. ।
४ गुलीपाशा, इति मा. ।
५ ने, इति मा. ।
६ द्वयोः, इति मा. ।

आतायिनि भवेच्चिल्लः चिल्ली स्याद्गौडवास्तुके ।
चुल्ली चितायामुद्धाने क्वचिद्वाक्येऽप्युदीरिता ॥
चेलं स्यादधमे वस्त्रे चोलः स्याद्देशभेदके[1] ।
छलं तु स्खलिते व्याजे[2] छली स्याद्वीरुधि स्त्रियाम् ॥
वल्कले कुसुमे[3] चापि छल्ली चेत्यभिधीयते ।
जालं गोकलने[4] नीरे ह्रीवेरे च जडेऽन्यवत् ॥
जालं गवाक्ष आनाये क्षारके दम्भवृन्दयोः ।
जालो नीपद्रुमे जाली पटोल्यामभिधीयते ॥
झला[5] स्यादातपस्योर्मौ कीटके दुहितर्यपि ।
झिल्ली चीर्यातपरुचोर्वर्त्यामुद्वर्त्तनांशुके ॥
[6]तलश्चपेटे तालद्रौ तलं ज्याघातवारणे ।
त्सरौ स्वभावाधरयोः तन्त्रीघाते च सव्यतः[7] ॥
तल्लो जलाधारभेदे तल्ली तु [8]तरुणस्त्रियाम् ।
तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च सम्मिते ॥
[9]गीतकालक्रियामाने करास्फाले द्रुमान्तरे ।
वाद्यभेदे च कांस्यस्य त्सरौ ताली जटौषधौ ॥
क्लीबं तु हरिताले स्यात्तुला-सादृश्यमानयोः ।
गृहाणां दारुबन्धाय पीठिकायामपीष्यते ॥

---

१ चोलोऽधमे देशभेदे वसने तु नपुंसकम्, इति मा. ।
२ ग्राम्य, इति मा. ।	३ द्रुमे, इति मा. ।
४ ले, इति मा. ।	५ झिल्ली, इति मा. ।
६ ता, इति मा. ।	७ ज्यतः, इति मा. ।
८ व, इति मा. ।	९ तल्लः ।

राशौ पलशने भाण्डे तूलं स्याद्ब्रह्मदारुणि ।
आकाशेऽथ पिचौ न स्त्री दलमुत्सेधखण्डयोः ॥
शस्त्रोच्छेदे[1]ऽप्यपद्रव्ये पत्रेऽप्यथ दुलिः स्त्रियाम् ।
कमठ्यां क्रीडने, दोला नील्यां यानान्तरे[2]ऽपि च ॥
नलः[3] कपौ राजभेदे यमे पोटगलेऽपि च ।
क्लीबे तु कमले नद्यां स्त्रियामप्यभिधीयते ॥
नलो नाले पद्मदण्डे नाली शाककदम्बयोः ।
नीलं तु नीलीरक्ते स्यान्निध्यद्रिप्लवगेषु ना ॥
नीली रुग्भेदनीलिन्योः पलं स्यान्मांसमानयोः ।
पल्लः[4] स्थूलकुसूले स्यात्कुथल्य[5]ग्रामयोः स्त्रियाम् ॥
पालिः कर्णलताग्रेऽ[6]श्रौ पङ्क्तावङ्कप्रभेदने ।
पालिः प्रस्थे च यूकायां जातश्मश्रुस्त्रियामपि ॥
पिल्लः पुमान् क्लिन्ननेत्रे क्लिन्नाक्षे पुनरन्यवत् ।
पीलुर्वृक्षे फले पीलु परमाणौ गजे च ना ॥
पीलुस्तालास्थिखण्डे च काण्डपादपभेदयोः ।
पुलस्तु पुलके पुंसि विपुले वाच्यलिङ्गवत् ॥
फलं हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयोः ।
जातीफले च कङ्कोले सस्यबाणाग्रयोरपि ॥
फलिन्यां तु फली योषा त्रिफलायामपीष्यते ।
फालं स्याद्वसने फाल उत्प्लुतौ शङ्करेऽपि च ॥

---

१ ऽथ च, इति मा. । २ नील्यां पालीतरे, इति मा. ।
३ तालः, इति मा. । ४ पलः, इति मा ।
५ ग्र, इति मा. । ६ श्रौयङ्क्तावस, इति मा. ।

सौराग्रलौहेऽपि[1] तथा फाली स्यादपि सौरिणि।
फेला फेलिस्तथोच्छिष्टे गदिता शब्दवेदिभिः॥
बलिस्तु दैत्यभेदे स्यात्करचामरदण्डयोः।
उपहारे राजदेये बलं स्यात्स्थौल्यसैन्ययोः॥
बलो[2] गन्धरसे रूपे स्थामन्यपि हलायुधे।
दैत्यभेदे वायसे च बलयुक्तेऽन्यलिङ्गकः॥
बला [3]वाट्यालके प्रोक्ता स्यादङ्गे[4] वाच्यलिङ्गकः।
अलङ्कारान्तरे मेध्ये बाली बाला त्रुटौ[5] स्त्रियाम्॥
भल्लो भल्लिश्च बाणे स्याद्भल्लो भल्लूक इष्यते[6]।
भल्लातके तु योषायां भालं तेजोललाटयोः॥
भेलः प्लवे मुनौ च स्यान्निर्बुद्धौ चापि भीरुके[7]।
मलं किट्टे पुरीषे च पापे[8] च कृपणे मलः॥
मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि।
[9]मालं जने च माला स्यात्पङ्क्तौ पुष्पादिदामनि॥
मालं क्षेत्रे स्त्रियां स्पृक्कास्रजोर्जात्यन्तरे पुमान्।
मालुः[10] पत्रलतानार्योः स्त्रियां मूलं शिफाद्ययोः॥
मूलं वित्तेऽन्तिके मेला मेलके च मसावपि[11]।
मौलिः किरीटे चूडायां धम्मिल्लकेलिमूर्धसु॥

---

१ क्लीबमिति शेषः। २ बोलो, इति मा. । ३ वाद्या, इति मा. ।
४ त्रे, इति मा. । ५ त्रुटौ, इति मा ।
६ मलूकरष्यते, इति मा. । ७ लुके, इति मा. ।
८ थे, इति मा. । ९ मालावने त्र इति मा. ।
१० मच्छः, इति मा. । ११ स्वजनेऽपि च इति मा. ।

लीला केलिविलासे शृङ्गारभावजक्रियायां च ।
लोलश्चले सतृष्णे रसनायां स्यात्स्त्रियां लक्ष्म्याम् ॥
वल्ली स्यादजमोदायां व्रतत्यामपि योषिति ।
वालो ना कुन्तलेऽश्वस्य गजस्यापि च वालधौ ॥
व्यालो दुष्टगजे स्याच्छ्वापदखलसर्पसिंहेषु ।
विलं गुहायां छिद्रे पुंसि तु माहेन्द्रतुरगे स्यात् ॥
बुधयोषायां [1]वेला श्रीमज्जनभोजनेऽपि स्यात् ।
वेला सिम्नि च काले रागे चाक्लिष्टमरणेऽपि ॥
वेला च जलधेस्तीरे पानीयस्यापि विकृतौ ।
दन्तमांसेऽपि वेला स्यादित्याहुः शब्दवेदिनः ॥
वेलो नीचेऽन्यवद्वेलमङ्के च गर्हितेऽन्यवत् ।
शलं तु शल्लकीलोम्नि[2] शलो भृङ्गिगणे विधौ ॥
शालुः[3] कषायद्रव्ये स्याच्चोरकाख्यौषधौ पुमान् ।
शालिस्तु गन्धमार्जारे कलमादिषु च स्मृतः ॥
शालो वृतौ[4] नृपे मत्स्यप्रभेदे सर्जपादपे ।
शाला गृहे तरुस्कन्धे शाखाऽगारैकदेशयोः ॥
शिलमुञ्छे शिला द्वाराधोदारु कुनटीदृषत् ।
शिली भेक्यां विनिर्दिष्टा शीलं वृत्तस्वभावयोः ॥
शुक्लो योगान्तरे पुंसि रजते तु नपुंसकम् ।
शुक्लं सिते वाच्यवत्स्याच्छूलं रोगायुधान्तरे ॥

---

१ वेलर, इति मा. । २ व्योम्नोः, इति मा ।
३ शालः, इति मा. । ४ हले, इति मा. ।

योगान्तरे पुमान् मृत्यौ केतकद्रावथ स्त्रियाम् ।
शूला स्यात्पण्ययोषायां कीले दुष्टवधार्थके ॥
शैलो महीध्रे शैलं तु शैलेये तार्क्ष्यशैलके[1] ।
सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि ॥
स्थालं भोजनपात्रेऽपि स्थाली स्यात्पाटलोखयोः ।
स्थूलं पीने[2] जडे हालः शालिवाहनभूभुजि ॥
हाला सुरायां हेला तु स्यादवज्ञाविलासयोः ।
हेला शृङ्गारभावस्य[3] क्रियायां च निगद्यते ॥
हेलिरालिङ्गने सूर्ये होली स्यादुत्सवान्तरे ॥

॥ इति लद्वितीयम् ॥

---

॥ अथ लतृतीयम् ॥

अनलः स्याद्वसावग्नावनिलो वसुवातयोः ।
अञ्जलिः कुडवे पुंसि हस्तसम्पुटकेऽपि च ॥
अवेलस्त्वपलापे स्यादवेला पूगचर्विते ।
अचला तु धरित्र्यां स्यादचलः शैलकीलयोः ॥
अर्गला[4] त्रिषु कल्लोले दण्डे [5]वारकपाटयोः ।
अर्गला द्वाररोधिन्यामपि प्रोक्ता निरोधने ॥
अरालः कुटिले सर्जरसे मत्तमतङ्गजे ।
अङ्गुलिः करशाखायां कर्णिकायां गजस्य च ॥

---

१ योरिति मा. । २ वीने, इति मा. । ३ नोथा, इति मा । ४ कुलामिति मा. । ५ नर, इति मा. ।

अमलं त्वंशुके क्लीबं लक्ष्म्यां स्त्री विमले त्रिषु ।
आभीलं न द्वयोः कृच्छ्रे वाच्यलिङ्गं भयानके ॥
इल्वला तारकाभेदे ना भेदे दैत्यमत्स्ययोः ।
इङ्गुलस्तु करीषाग्नावुत्पलं मांसवर्जिते ॥
उत्पली तुषचर्पट्यां क्लीबे कुष्ठे च कैरवे ।
उपलः प्रस्तरे रत्ने शर्करायां मतोपला ॥
उत्फुल्लं करणे स्त्रीणामुत्ताने च विकस्वरे ।
उत्तालस्तूत्कटे श्रेष्ठे विकराले प्लवङ्गमे ॥
उद्दालः [1]कोद्रवे प्रोक्तस्त्वेकके मत एकलः ।
कमलो दैत्यमृगयोः कमलं वारिजे जले ॥
कमला वरयोषायामपि लक्ष्म्यां निगद्यते ।
कपिलो वासुदेवेऽग्नौ कुक्कुटे च मुनावपि ॥
कपिलः पिङ्गवर्णे स्याद्रेणुकायां तु योषिति ।
पुण्डरीककरिण्यां च [2]शिंशपागोविशेषयोः ॥
कम्बलः स्यान्नागभेदे सास्नाप्रावारयोरपि ।
कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम् ॥
कम्बली [3]मृगभेदे स्यात्पुंसि कम्बलधारिणि ।
करालो भीषणे चाथ तुङ्गदन्तुरयोरपि ॥
ससर्जरसतैले ना क्लीबं कृष्णाकुठेरके[4] ।
कन्दलस्तु कपाले स्यादुपरागे नवाङ्कुरे ॥

१ स्यात्तु शृङ्गारे, इति मा.। २ पशुयाग, इति मा.।
३ ग्रन्थ, इति मा.। ४ लोध्रकुठेरयोरिति मा.।

कलध्वनौ कन्दली तु [१]मृगगुच्छविशेषयोः ।
कदलाकदलौ प्रश्न्यां कदलीकदलौ पुनः ॥
रम्भावृक्षेऽथ कदली पताकामृगभेदयोः ।
कदला डिम्बिकायां च शाल्मलीभूरुहेऽपि च ॥
कपालं कुष्ठरुग्भेदे घटादिशकले गणे[२] ।
शिरोऽस्थनि कपालीति स्त्रियां[३] प्रोक्ता मनीषिभिः ॥
कण्ठाला तु द्वयो[४]र्द्रोणीप्रभेदे ना क्रमेलके ।
कल्लोलस्तु भवेद्धर्षे तथा वारिमहोर्मिषु ॥
कामला रोगभेदे वा ना ना मरुवसन्तयोः ।
कामुके वाच्यलिङ्गोऽथ काकोलो नरकान्तरे ॥
कुलाले[५] द्रोणकाके च विषभेदे च न स्त्रियाम् ।
काहलाऽप्सरसो भेदे वाद्यभेदे च गद्यते ॥
काहलः शब्दमात्रेऽपि तथैव चरणायुधे ।
काहली[६] च तरुण्यां स्यात्त्रिषु शुष्के भृशे खले ॥
किट्टालस्ताम्रकलशे [७]लोहगूथेऽपि कीर्त्यते ।
किसलं स्यात्किसलये सर्वशब्दकृताम्मतम् ॥
कीलालं रुधिरे तोये कुशलः शिक्षिते त्रिषु ।
क्षेमे च सुकृते चापि पर्याप्तौ च नपुंसकम् ॥
कुवलं चोत्पले मुक्ताफले च बदरीफले ।
कुड्मलः मुकुले पुंसि न द्वयोर्नरकान्तरे ॥

१ मृगपङ्क्ति, इति मा. । २ व्रजे, इत्येके ।
३ स्त्रियां क्वचिदिति केशवः । ४ वेणौ, इति, मा. ।
५ कालुको, इति मा. । ६ तथैव, इति मा. । ७ होलय, इति मा, ।

कुटिलो वाच्यलिङ्गः स्याद्भुग्ने नद्यां तु योषिति ।
कुम्भिलः श्यालके चोरे श्लोकच्छायाहरेऽपि च ॥
कुद्दालो युगपत्रे स्यात्तथाभूमिविदारणे ।
कुचेला स्याद्विद्धकर्ण्यां वाच्यवच्च कुवाससि ॥
कुकूलं शङ्कुसङ्कीर्णश्वभ्रे ना तु तुषानले ।
कुण्डलं वलये पाशे तथा कर्णविभूषणे ॥
काञ्चनद्रुगुडूच्योः स्त्री पन्नगे कुण्डली[1] मतः ।
कुन्तलः स्याद्यवे देशे केशलाङ्गलयोरपि ॥
कुलालः ककुभे कुम्भकारे चाप्यञ्जनान्तरे ।
केवलः कुहनेऽपि स्यान्निर्णीते चैककृत्स्नयोः ॥
कोमलं मृदुले तोये कोहलो मद्यभिद्यपि ।
कोहलो [2]वाद्यभेदेऽपि [3]नाट्यशास्त्रप्रयोक्तरि ॥
ग्रन्थीलस्तु करीरद्रौ विकङ्कततरावपि ।
सग्रन्थौ त्रिषु भद्रायां गन्धोली वरटासटी ॥
गरलं तृणपूले[4] च विषे माने नपुंसकम् ।
गोपालस्तु नृपे गोपे गोकीलो मुसले हले ॥
[5]गौरिलस्तु पुमाँल्लोहचूर्णे स्याद्गौरसर्षपे ।
चपलश्चोरके मीने पारदे प्रस्तरान्तरे ॥
चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च ।
नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले ॥

---

१ तु पुमान्, इति मा. । २ दैत्य, इति मा. ।
३ नाम्र, इति मा. । ४ स्त्रिषु पूरे, इति मा. ।
५ गौली, इति मा. ।

चन्द्रिलः पुंसि वास्तूकशाकभेदेऽपि नापिते ।
चञ्चला तु तडिल्लक्ष्म्योः चञ्चलश्चपलेऽनिले ॥
चूडाला तूच्चटायां स्याच्चूडावति च वाच्यवत् ।
छगलं नीलवस्त्रे ना छागे स्त्री वृद्धदारके ॥
[1]जम्बालः शैवले पङ्के जगलो मेदकेऽपि च ।
मदनद्रौ पिष्टमद्ये पुंसि धूर्त्ते तु वाच्यवत् ॥
जटिला पिप्पलीमांस्योर्जटायुक्तेऽपि वाच्यवत् ।
जङ्गलं निर्जलस्थाने चिलिङ्गां पिशितेऽस्त्रियाम् ॥
जङ्घालस्तु मतः शीघ्रगमने नरि तद्विदाम् ।
जम्भलः पुंसि जम्बीरे [2]बुद्धदेवान्तरेऽपि च ॥
जम्बूलो जम्बुविटपे पुंसि स्यात्क्रकचच्छदे ।
जाङ्गलो वातभूयिष्ठदेशे ना तु कपिञ्जले ॥
जाङ्गली विषविद्यायां जाङ्गुलं [3]जालिनीफले ।
जाङ्गली शूकशिम्ब्यां स्यात्तरलं चञ्चलेऽपि च ॥
खङ्गे[4] च भास्वरे[5] चापि चिलिङ्गमुपदिश्यते ।
हारमध्यमणौ पुंसि यवागुसुरयोः स्त्रियाम् ॥
तण्डुलस्तु विडङ्गे स्याद्धान्यादिनिकरेऽपि च ।
तमालस्तिलके खङ्गे तापिच्छे वरुणद्रुमे ॥
ताम्बूली स्त्री नागवल्ल्यां ताम्बूलं क्रमुके मतम् ।
तातलो रुजि पाके च लोहकूटे मनोजवे ॥

१ जाबालो जगलेयङ्के शैवले, इति मा. । २ बुद्धदे चा, इति मा. ।
३ जागली, इति मा. । ४ पिङ्गे, इत्यन्यत्र ।
५ स्वरे, इति मा. ।

तुमुलस्तु कलिद्रौ स्यात्तुमुलं रणसङ्कुले ।
तैतिलो गण्डके पुंसि क्लीबं तु करणान्तरे ॥

दुकूलं स्याच्छ्लक्ष्णवस्त्रे क्षौमे च धवला गवि ।
वृषश्रेष्ठे[१] पुमान् वाच्यलिङ्गः शुक्ले च सुन्दरे ॥

नकुली कुक्कुटीमांस्योः पशुपाण्डवयोः पुमान् ।
नाकुली कुक्कुटीकन्दे रास्नायां चव्यके स्त्रियाम् ॥

नाभीलं वङ्क्षणे नार्याः कृच्छ्रगर्भाण्डयोरपि ।
निचुलो हिज्जले चापि निचोले च महीरुहे ॥

निर्मलं मलहीने स्यान्निर्माल्ये चाभ्रकेऽपि च ।
निष्कलस्तु कलाशून्ये निस्तलं वर्त्तुले चले ॥

निष्कलं नष्टबीजे स्यान्नेपालो देशभिद्यपि ।
मनःशिलायां नैपाली सुवहा नवमाल्यपि[२] ॥

पललं तिलचूर्णे स्यात्तथा मांसे नपुंसकम् ।
ना राक्षसेऽथ पटलं क्लीबं वृन्दे पुनर्न ना[३] ॥

छदिर्दृग्रोगपिटके तिलके च नपुंसकम् ।
प्रतलं स्यात्तु पाताले तताङ्गुलिकरे पुमान् ॥

ज्योत्स्नायां तु पटोला स्यात्पटोलं वस्त्रभिद्यपि ।
प्रवालो विद्रुमे वीणादण्डे किसलयेऽपि च ॥

पाञ्चाली पुत्त्रिकागीत्योः पाण्डवानां च योषिति ।
स्त्रियां पुम्भूम्नि निर्दिष्टो नीवृद्भेदेऽथ पांसुलः ॥

१ श्रेष्ठे, इति मा. । २ वनमाल्यपि, इति मा. ।
३ वे, इति मा. ।

पुंश्चले हरखट्वाङ्गे स्त्रियां स्यादसतीभुवोः ।
वाच्यलिङ्गः सरजसि श्वेतरक्ते तु पाटलः ॥
व्रीहिभेदे पाटला स्यात्तरौ पुष्पे तु पाटलम् ।
पाचलो राधनद्रव्येऽप्यनिलानलयोरपि ॥
पाकलं कुष्ठभैषज्ये पाकलः कुञ्जरज्वरे ।
पाचलं पाचने नाऽग्नौ राधनद्रव्यवातयोः ॥
पाटला पाटली स्त्री स्यादस्याः पुष्पे पुनर्न ना ।
आशुधान्ये पुमान् श्वेतरक्तवर्णे तु वाच्यवत् ॥
पातालं स्यान्नागलोके विवरे वडवानले ।
पातिली वागुरायां स्यान्नारीपात्रप्रभेदयोः ॥
पित्तलं तैजसद्रव्ये पित्तवत्यपि वाच्यवत् ।
[1]पित्तला तोयपिप्पल्यां पिच्छिलो विजिलेऽन्यवत् ॥
स्त्री पोतिकाशिंशपयोः शाल्मलीसिन्धुभेदयोः ।
पिप्पलः स्याच्चलदले[2] भक्तसिक्थे तु पिप्पलम् ॥
तथैव सलिले वस्त्रच्छेदे पुंसि निरंशुके[3] ।
तथा पक्षिप्रभेदेऽपि कणायां पिप्पली मता ॥
पिञ्जलं तु हरिद्राभे कुशपत्रेऽपि कीर्त्यते ।
पिङ्गलो नागभेदे स्याद्वेश्याभेदे तु पिङ्गला ॥
अपि दिङ्नागयोषायां पिङ्गलेति निगद्यते ।
पिञ्जोलेत्यवगदिता पत्रकाहलिका बुधैः[4] ॥

---

१ पिप्पला, इत्येके ।  २ पिप्पलवृक्षे, इत्यर्थः ।
३ ले, इति विश्वः ।  ४ या तु पत्रकाहालिका, इति मा ।

तथा विहगभेदेऽपि पिचुलो जलवायसे ।
पुद्गलः सुन्दराकारे तथा स्यादात्मदेहयोः[१] ॥
पेशलो रुचिरे दक्षे[२] फेनिलोऽरिष्टपादपे ।
ना फेनिले त्रिषु क्लीबं कोलीमदनयोः फले ॥
बहुलः कृष्णपक्षेऽग्नौ शितौ च बहुला गवि ।
[३]एलायां नीलिकायां च विहायसि नपुंसकम् ॥
कृत्तिकासु स्त्रियां भूम्नि मङ्गलो भूमिजे ग्रहे ।
मङ्गला सितदूर्वायां कल्याणे तु नपुंसकम् ॥
सर्वार्थरक्षिणे[४] पुंसि मङ्गलः परिकीर्तितः ।
मण्डलः कुक्कुरे पुंसि बिम्बे च निवहे त्रिषु ॥
क्लीबे तु परिधौ कोठे[५] देशे द्वादशराजसु ।
[६]मञ्जुलं वाच्यवन्मञ्जौ जलरङ्कौ नपुंसकम्[७] ॥
जलाञ्चले निकुञ्जे च क्लीबं मञ्जूलमीरितम् ।
मरुला तु नदीभेदे मारुलं तद्भवे त्रिषु ॥
महिला फलिनीनार्योर्मातुलो मदनद्रुमे ।
मातृभ्रातरि धत्तूरे व्रीहिभेदे च कथ्यते ॥
माचलो बन्दिचौरे स्यादपि च ग्राहरोगयोः ।
मुसलः स्यादयोऽग्रे तु पुन्नपुंसकयोरपि ॥
ग्रहगोधातालमूल्योराखुपर्ण्यां च योषिति ।
मृणालं नलदे क्लीबं पुन्नपुंसकयोर्बिसे ॥

---

१ तथा दात्येदेहयोरिति मा. । २ वृद्धे, इति मा. ।
३ चला, इति मा. । ४ दक्षिणे, इति मा. । ५ कोष्ठे, इति मा. ।
६ मण्ड, इति मा. । ७ तु वामतः, इति मा. ।

मेखला खड्गबन्धे स्याद्रसनाद्रिनितम्बयोः ।
यमलं युगले प्राहुर्यमलौ चोटिकाद्वये ॥
रसालः सहकारेक्ष्वोः क्लीबे सिल्हकबोलयोः ।
रामिलो रमणेऽनङ्गे लाङ्गूलं पुच्छशेफयोः ॥
लाङ्गली तोयपिप्पल्यां क्लीबे तु कुसुमान्तरे ।
गृहदारुविशेषे गोदारणे तृणराजके ॥
लाङ्गली नारिकेलद्रौ[1] रेवतीरमणे पुमान् ।
लोहलः शृङ्खलाधार्येऽव्यक्तवाचिनि च त्रिषु ॥
वनलो गन्धमार्जारे वञ्चकव्याघ्रयोः पुमान् ।
[2]वण्टालो युद्धभेदे च नौकायां च खनित्रके ॥
वञ्जुलस्तिनिशाशोकवेतसेषु निगद्यते ।
(वातु)लः पुंसि वात्यायां वाच्यवन्मारुतासहे ॥
[3]वामिलो दाम्भिके वामे त्रिषु स्याद्वार्दलं पुनः ।
दुर्दिनेऽथ भवत्येलानन्दायामपि वार्दलः ॥
विमला शातलायां स्याद्भुवो भेदे च निर्मले ।
विशाला त्विन्द्रवारुण्यामुज्जयिन्यां च कीर्त्यते ॥
[4]नृपरक्षोभिदोः पुंसि पृथुले त्वभिधेयवत् ।
विदुलस्तु पुमानम्बु[5]वेतसे वेतसेऽपि च ॥
विपुलः पृथुलेऽगाधे मेरुपश्चिमभूधरे ।
विडालः स्यान्नेत्रपिण्डे तथा च वृषदंशके ॥

---

१ रज्जौ, इति मा. ।  २ वंसा, इति मा. ।
३ व्याम, इति मा. ।  ४ मृगपक्षिभिदोरिति मेदिनी ।
५ म्ल, इति मा. ।

वृषलो गृञ्जने शूद्रे चन्द्रगुप्ते च वाजिनि ।
शम्बलं कुलपाथेयमत्सरेषु समीरितम् ॥
शकलं त्वचि खण्डे स्याद्रागवस्तुनि वल्कले ।
शयालुः स्यादजगरे निद्राशीले गजेऽपि च[1] ॥
श्यामलो मेचकेऽस्वच्छे श्रद्धालुः श्रद्धया युते ।
श्रद्धालुर्दोहदिन्यां स्याच्छार्दूलो व्याघ्ररक्षसोः ॥
शार्दूलः पशुभेदे च सत्तमे[2] च निगद्यते ।
शाल्मलिर्द्वीपभिद्वृक्षभिदोर्नरकतार्क्ष्ययोः ॥
श्रीफला नीलिकाधात्र्योर्मालूरे पुंसि गद्यते ।
शीतलं पुष्पकासीसे शैलजे मलयोद्भवे ॥
शीतलं स्यादनुष्णेऽपि स्याद्विस्फोटेषु शीतला ।
भवेदसनपर्ण्यां च शीतलः शिशिरेऽन्यवत् ॥
शीतलाख्या च शैवाले शैलेयेऽपि नपुंसकम् ।
शृगालो वञ्चके दैत्यभेदे ना [3]डमरे स्त्रियाम् ॥
शृङ्खला [4]पुंस्कटीकाञ्च्योर्लोहरज्जौ च बन्धने ।
शौष्कलः शुष्कमांसस्य पणके[5] पिशिताशिनि ॥
[6]सरलः पूतिकाष्ठे स्यादुदारावक्रयोरपि ।
सङ्कुलं वाच्यवद्व्याप्ते विस्पष्टार्थे वचस्यपि ॥
सप्तला पाटलागुञ्जानवमालीषु च स्त्रियाम् ।
तथा चर्मकषायां च सिध्मलस्तु किलासिनि ॥

---

१ च कुक्कुरे, इति मेदिनी ।
२ उत्तरस्थितः, इति शेषः ।
३ नग, इति मा. ।
४ पुंश्चली, इति मा. ।
५ वके, इति मा. ।
६ रसा, इति मा. ।

वाच्यवन्मत्स्यविकृतौ [1]सिध्मला त्वपि योषिति ।
[2]मन्थिला तु सुरुङ्गायां नदीमदिरयोरपि ॥
सुवेलः प्रणते शान्ते त्रिषु ना पर्वते क्वचित् ।
सुतलोऽट्टालिकाबन्धनागलोकप्रभेदयोः ॥
मता शब्दविदां पुंसां स्रुचालि[3]र्गजशृङ्खला ।
हिङ्गुलो वर्णकद्रव्ये ना भण्टाक्यां तु हिङ्गुली ॥
हेमलः स्यात्स्वर्णकारे कृकलासे सिलान्तरे ॥

॥ इति लतृतीयम् ॥

---

॥ अथ लचतुर्थम् ॥

[4]मुनेर्भेदे त्वपिशलो यथा चाऽऽपिशलिर्मतः ।
अक्षमालाऽक्षसूत्रे स्यादरुन्धत्यामपीष्यते ॥
प्रबले स्यादतिबलः स्त्रियामोषधिभिद्यपि ।
अङ्कपालो परीरम्भे धात्रीवेदिकयोः स्त्रियाम् ॥
[5]उदूखलं (गु)ग्गुलौ स्यादुलूखलेऽपि न द्वयोः ।
एकाष्ठीलो बुकपुष्पे वनतिक्तौषधौ स्त्रियाम्[6] ॥
कोलाहले कलकलस्तथा सर्जरसेऽपि च ।
मतं कर्मफलं कर्मविपाके कर्मरङ्गके ॥

---

१ संवि, इति मा. ।  २ संविलो लसु तु, इति मा ।
३ र्गल, इति मा. ।
४ अपिलि मुनेर्भेदे कथिता पिप्पलि यथा, इति मा. ।
५ उलू, इति मा. ।  ६ द्वावपि, इति मा. ।

कन्दरालः (प्लक्ष)तरौ [1]गर्दभाण्डेऽपि सम्मतः ।
कमण्डलुस्तु करके [2]पर्कटीपादपेऽपि च ॥
कुजम्भलो निगदितस्तस्करे शब्दवेदिभिः ।
तथा क्रोशध्वनौ क्रोशतालोऽपि गदितो बुधैः ॥
कुतूहलं कौतुके स्यात्प्रशस्तेऽपि तु वाच्यवत् ।
खतमालस्तु मेघे स्यादपि धूमे निगद्यते ॥
गन्धफल्यपि गुन्द्रायां चम्पकस्य च कोरके ।
गण्डशैलो ललाटे स्याच्च्युते स्थूलोपले गिरेः ॥
घनवल्ली निगदिता सौदामिन्यां विशारदैः ।
चक्रवालोऽद्रिभेदे[3] स्याच्चक्रवालं तु मण्डले ॥
चतुःशालं सभागेहे प्रवदन्ति मनीषिणः ।
जलाञ्चलं स्वतोवारिनिर्गमे शैवलेऽपि च ॥
जयज्वाली निगदितो दीपे शब्दज्ञशेखरैः ।
त्वक्शाल्मली तु रम्भायां तृणसारा यथा भवेत् ॥
दलामलं मरुबके [4]दमनेऽपि नपुंसकम् ।
ध्वनिनाला तु वीणायां वेणुकाहलयोरपि ॥
परिमलो विमर्देऽपि स्यान्मनोहरगन्धवत् ।
(सु)रतोपमर्दविकसद्देहरागादिसौरभे ॥
भवेत्पोटगलश्चापि नले च काशमीनयोः ।
भवेद्बहुफलाभिख्या मलयूनिपवृक्षयोः[5] ॥

---

१ वा, इति मा. ।
२ कर्कटो, इति मा. ।
३ द्रि भेदे, इति मा. ।
४ मद, इति मा. ।
५ तत्र नीपवृक्षे पुंसीति बोध्यम् ।

भस्मतूलं ग्रामकूटे पांशुवर्षे हिमेऽपि च ।
भद्रकाली तु [1]गन्धोलीकात्यायन्योरपि स्त्रियाम् ॥
भम्भराली मक्षिकायामित्याहुः शब्दकोविदाः ।
महाकालो महादेवे किम्पाके प्रमथान्तरे ॥
मदकलो भवेन्मत्तेभम(दा)व्यक्तवाचिनोः ।
महाबला बलायां स्यात्सीसके तु नपुंसकम् ॥
बलोत्कटे वाच्यलिङ्गो, मणिमाला निगद्यते ।
दन्तक्षतान्तरे हारे, महानीलो मणेर्भिदि ॥
तथैव स्याद्भृङ्गराजे क्वचिन्नागेऽपि गद्यते ।
मुक्ताफलं तु कर्पूरे मौक्तिके लवलीफले ॥
कदल्यां स्यान्मृत्युफला महाकालफले पुमान् ।
भवेद्यवफलो वेणौ मांसीकुटजयोरपि ॥
रक्तोपलं गैरिके तु वदन्ति मतिमज्जनाः ।
रजस्वला पुष्पवत्यां [2]सौरभे तु रजस्वलः ॥
लोकपालो महेन्द्रेऽपि मतो भूमिपतावपि ।
लम्बनाल[3]स्तु जलजे वनमाली तु शार्ङ्गिणि ॥
वातकेलिः कलालापे षिङ्गदन्तक्षते पुमान् ।
शक्रचापे वातफलं तथैव जलदोपले ॥
भवेद्विचकिलो मल्लीद्रुभेदे मदनेऽपि च ।
बृहन्नला गुडाकेशे महापोटगले पुमान् ॥

---

१ गन्धोली, इति मा. । २ से, इति मा. ।
३ नामः, इति मा. ।

सदाफलः स्कन्दफले नारिकेलेऽप्युदुम्बरे ।
यः शिवायतनोत्सृष्टो मतः सन्ध्याबलिर्वृषः ॥
सिनीवाली तु [1]दृष्टेन्दुकलाऽमादुर्गयोः[2] स्त्रियाम् ।
अवन्तिसोमे गदितं बुधैः सिद्धजलं त्विति ॥
अथ सौवर्चलं सर्जक्षारे च लवणान्तरे ।
हस्तिमल्लोऽभ्रमातङ्गे शङ्खनागे[3] विनायके ॥
हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयोः ।
हलाहलो ब्रह्मसर्पे ज्येष्ठिकायां विषेऽस्त्रियाम्[4] ॥
हालाहलो विषे कीटे[5] हयलाला हयोरगे ॥

॥ इति लचतुर्थम् ॥

---

॥ अथ लपञ्चमम् ॥

आसुतीबल इत्याख्या [6]कल्यपादपयज्वनोः ।
भवेदुद्दण्डपालस्तु सर्पमत्स्यप्रभेदयोः ॥
एककुण्डल इत्याख्या कुबेरबलभद्रयोः ।
क्षपीटपाल इत्युक्तः केनिपातसमुद्रयोः ॥
स्यात्पाण्डुकम्बलः श्वेतप्रावारग्रावभेदयोः ।
वराहकाली कथिता तुर्यावर्ते तु शाब्दिकैः ॥
भवेत्सुरतताली[7] तु दूतिकायां शिरःस्रजि ॥

॥ इति शब्दरत्नसमन्वये राजकोशापरपर्याये लान्तवर्गः ॥

---

१ न, इति मा. । २ पूर्णिमयोः, इति मा. । ३ नादे, इति मा. ।
४ विषे हालाहलोऽस्त्रियामिति मा. । ५ ज्येष्ठा, इति मा. ।
६ कन्यापालक, इति मेदिनी । ७ लाली, इति मा. ।

॥ अथ वान्तवर्गः ॥

वं प्रचेतसि जानीयादिवार्थे च तदव्ययम् ।
[1]स्वं ज्ञातावात्मधनयोरात्मीये च प्रचक्षते ॥
गन्धने वं तु सन्ताने पुंसि [2]वः पवने मतः ।
वा समुच्चय उद्दिष्टं विकल्पोत्प्रेक्षयोरपि ॥

॥ इति वैकम् ॥

---

॥ अथ वद्वितीयम् ॥

अविः सूर्ये गिरौ मेषे तथा कम्बलमूषके ।
[3]अश्वः पुञ्जातिभेदे स्यात्तुरङ्गे च[4] पुमानयम् ॥
अध्वा ना पथि संस्थाने सास्रवस्कन्धकाययोः ।
उर्ध्वं स्यादुच्छ्रिते तुङ्गे चोपरिष्टादपि स्मृतम् ॥
एवं च स्यात्प्रकारार्थेऽव्ययं कविरिति ध्वनिः ।
वाल्मीकिकाव्ययोः काव्यकरे सूरौ[5] पुमानथ ॥
कविः खलीने कथिता कण्वं पापे मुनौ पुमान् ।
किण्वं पापे सुराबीजे खर्वो [6]ह्रस्वन्यगर्थयोः ॥
गर्वोऽभिमाने ग्रावा स्यात्प्रस्तरे च महीधरे ।
ग्रीवा तु कन्धरायां स्यात्तत्सिरायामपीष्यते ॥

---

१ सं, इति मा. ।
२ स्वंष, इति मा. ।
३ अर्वा तु पश्चिसम्भेदे, इति मा. ।
४ न, इति मा. ।
५ शुरे, इति मा. ।
६ ह्रस्वो च. इति मा. ।

मनोज्ञे चारु गदितं चार्वस्तु कलहंसके।
चार्वी तु शोभनाबुध्यो [१]ज्योत्स्नाधनदभार्ययोः॥
छविः शोभारुचो[२]र्योषिज्जवो वेगे च तद्वति।
औण्ड्रपुष्पे जवा योषिज्जीवस्तु स्याद्द्रुमान्तरे॥
बृहस्पतौ प्राणिनि च जीवं जीवा च जीवने।
जीवा जीवन्तिकामौर्व्योर्वचा[३]सिञ्जितभूमिषु॥
दवो दावश्च गदितौ वनाग्निवनयोरपि।
द्वन्द्वं रहस्ये कलहे तथा मिथुनयुग्मयोः॥
द्रवः प्रद्रावरसयोर्न ना नर्मणि विद्रवे।
दर्वी स्त्रियां यज्ञपात्रे दावं क्लीबे वने मतम्॥
दार्वी दारुहरिद्रायां तथा गोजिह्विकौषधौ।
दिवं [४]स्वर्गे च गगने क्लीबं दूर्वा तृणान्तरे॥
देवः सुरे नृपे चैव घने देवः प्रकीर्तितः।
देवमिन्द्रियमाख्यातं क्लीबे देवी पुनः स्त्रियाम्॥
कृताभिषेकयोषायां तेजनीपृक्कयोरपि।
दैवं भाग्ये च नियतौ देवसम्बन्धवत्यपि॥
धवो वृक्षान्तरे धूर्ते पत्यावपि निगद्यते।
धन्वी धनुर्धरेऽपि स्याद्वर्जने ककुभद्रुमे॥
धन्वा तु मरुदेशे ना क्लीबे चापे स्थलेऽपि च।
ध्रुवः कीले हरौ शम्भौ वसौ योगे वटे मुनौ॥

---

१ योषा, इति मा.। २ तु वा, इति मा.।
३ भूम्योमौर्वी, इति मा.। ४ स, इति मा.।

ध्रुवा मूर्वाशालिपर्ण्योर्गीतिसुग्भेदयोरपि।
ध्रुवं स्यान्निश्चिते क्लीबे तथा तर्के च शाश्वते॥

वदन्त्यपि विशेषज्ञा नवं त्रिषु[1] चतुष्टये?।
नवो नव्ये स्तुतौ नीवी स्त्रीकटीवस्त्रबन्धने॥

मूलद्रव्ये परिपणे प्लवः प्लक्षे प्लुतौ कपौ[2]।
शब्दे कारण्डवे भेके कुलके भेलके घने[3]॥

प्लवं गन्धतृणे प्रोक्तं चण्डालजलकाकयोः।
[4]कैवर्तीमुस्तके चैव हंससारसकादिषु॥

क्रमनिम्नमहीभागे, पक्कं परिणते तथा।
विनाशाभिमुखे चापि प्रह्वः प्रणतनम्रयोः॥

पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे।
दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि॥

पार्श्वं स्यादन्तिके कक्षाधरे पर्शुगणेऽपि च।
चक्रोपान्ते च पार्श्वं स्यात्प्राध्वं तु प्रणते मतम्॥

तथैव प्राध्वमुदितं दूरवर्त्मनि बन्धने।
पूर्वं तु पूर्वजे प्राच्यां प्रथमे[5] श्रुतिभेदके॥

पृथ्वी भूमौ महत्यां च त्वक्पत्र्यां कृष्णजीरके।
भवः क्षेमेशसंसारसत्तासम्प्राप्तिजन्मसु॥

भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु।
क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु॥

---

१ क्लिष्कु, इति मा.। २ म्यौ, इति मा.। ३ रवे, इति मा.।
४ प्लुतौ म्लेच्छे मुस्तके च कैवर्त्यां च निगद्यते, इति मा.।
५ प्रागथ, इति मा.।

रत्यादौ[१] चाथ रेवा स्यान्नद्यां[२] नील्यां स्मरस्त्रियाम् ।
लवो विलासे लेशे च छेदे काले च रामजे[३] ॥
लङ्गा करञ्जभेदे स्यात्फले वाद्ये खगान्तरे ।
लघ्वी ह्रस्वविवक्षायां प्रभेदे स्यन्दनस्य च ॥
विश्वं तु भुवने कृत्स्ने विश्वे देवेषु नागरे ।
विश्वाऽप्यतिविषायां स्याद्विश्वो भूम्नि वसौ मतः[४] ॥
बिल्वो ना श्रीफले प्रोक्तः शवः स्यात्प्राणवर्जिते ।
शावं तु स्याच्छवाऽऽशौचे शिवा तु स्यान्मृगान्तरे ॥
शिवं मोक्षे सुखे भद्रे सलिले च शिवो हरे[५] ।
वेदे योगान्तरे कीले वालुके गुग्गुलावपि ॥
पुण्डरीकद्रुमे चापि शिवा झाटामलोषधौ ।
सत्त्वं द्रव्ये गुणे वित्ते[६] व्यवसायस्वभावयोः ॥
पिशाचादा(वा)त्मभावे बले प्राणेषु जन्तुषु ।
सवो यज्ञे सुसन्धाने समग्रे सर्वमीरितम् ॥
सान्त्वं साम्नि च दाक्षिण्ये स्रुवो होमस्य पाचके ।
शल्लकीमूर्वयो[७]श्चापि, सेवा स्यात्परिचारणे ॥
हव आज्ञाध्वराह्वाने[८] कथितः शब्दवेदिभिः ।
हावः प्रोक्तस्तु नाट्याङ्गे ह्रस्वः खर्वे स्वरान्तरे ॥
क्षवः क्षुते पुमानुक्तो राजिकायां क्षवा मता ॥

॥ इति वद्वितीयम् ॥

---

१ यादौ, इति मा. । २ तु द्यां, इति मा. । ३ ठे, इति मा. ।
४ पुम्भेदवाजिनोः, इति मा. । ५ रौ इति मा. ।
६ वृत्ते, इति मा. । ७ र्वयो, इति मा. । ८ ध्याने, इति मा. ।

॥ अथ वतृतीयम् ॥

अभावो मरणेऽसत्वेऽप्यधवा विधवास्त्रियाम् ।
अटवी तु वने प्रोक्ता निःशब्दे त्वरवो मतः ॥
अश्रवः श्रोत्ररहितेऽप्याहवो यागयुद्धयोः ।
आर्तवं स्त्रीरजस्युक्तमृतुजे तु मतं त्रिषु ॥
आश्रवोऽङ्गीकृतौ क्लेशे नान्यवद्वचनस्थिते ।
आरावश्चारवः शब्देऽप्यास्नवं स्नान इष्यते ॥
उद्भवो यादवभिदि मद्दे च क्रतुपावके[1] ।
उत्सवो मह उत्सेक [2]इच्छाप्रसरकोपयोः ॥
कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरयोः ।
किरवः स्यात्तु दुःशब्दे कितवो मत्तधूर्त्तयोः ॥
कनकाह्वयवृक्षे च पेचके कितवो मतः ।
केशवोऽजे च पुन्नागे पुंसि केशवति त्रिषु ॥
कैतवं तु छले [3]द्यूते कैरवः कितवे रिपौ ।
कैरवी चन्द्रिकायां स्यात्कुमुदेऽपि तु कैरवम् ॥
कौरवो राजभेदेऽपि तथा काके निगद्यते ।
नभश्चरे च गन्धर्वो रागभेदे तुरङ्गमे ॥
पुंस्कोकिले गायके वा चाऽन्तराभवदेहके ।
गालवो[4] लोध्रवृक्षे स्यान्मुनिभेदे च कीर्तितः ॥

---

१ लक्के, इति मा. ।　　२ पौडा, इति मा. ।
३ धूर्ते कैत, इति मा. ।　　४ वलो, इति मा. ।

गाण्डीवो गाण्डिवश्चापि कार्मुकेऽर्जुनकार्मुके ।
गाण्डीवगाण्डिवे क्लीबे[१] स्यातामर्जुनधन्वनि ॥

तपस्वी तापसे चानुकम्प्ये त्रिष्वथ[२] योषिति ।
मांसिकाकटुरोहिण्योस्तरस्वी शरवेगिनोः ॥

ताण्डवं तृणभेदे स्यान्नाट्ये च परिकीर्तितम् ।
त्रिदिवं तु सुखे स्वर्गे स्वर्णद्यां त्रिदिवा मता ॥

द्विजिह्वस्तु[३] खले सर्पे दौदिविर्धिषणान्नयोः ।
दानवस्तु दनोः पुत्रे काष्ठीये दारवं मतम् ॥

वृक्षजे द्रुभवं प्राहुर्धेनुजे धैनवं मतम् ।
निष्पावस्तु [४]शूर्पवायौ राजमाषे कडङ्करे ॥

निष्पावः [५]शिम्बिकायां स्यान्निर्विकल्पेऽन्यलिङ्गकः ।
निह्नवो निकृतौ प्रोक्त(श्वा)विश्वासापलापयोः ॥

प्रभवो जन्महेतौ स्यात्प्रभावे वत्सरेऽपि च ।
आद्योपलब्धये स्थानेऽपाम्मूले[६] मुनिभिद्यपि ॥

प्रसवः पुष्पफलयोरपत्ये गर्भमोचने ।
उत्पादे च प्रसेवस्तु वीणाङ्गस्यूतयोर्मतः[७] ॥

प्रभावस्तेजसि प्रोक्तः शक्तौ चापि पराक्रमे ।
पल्लवो विटपे खड्गे विस्तरेऽपि चले[८] मतः ॥

---

१ गाञ्जीवगाञ्जिवे चापि, इति मा. ।
२ त्रिष्ठिय, इति मा. ।
३ ह्वा तु, इति मा. ।
४ रवौ, इति मा. ।
५ वो पि च निष्पावे, इति मा. ।
६ सुले, इति मा. ।
७ दृंतौ, इति मा. ।
८ प्यचले, इति मा. ।

